अङ्गारोहणवस्त्रपात्रवलकस्तम्भादनेकादरान्

दृष्ट्वा तान् वसतेर्बहिश्च परितः श्वानौतुसर्पध्वनीन् ।

श्रुत्वा रौद्रतमान् प्रकंप्रतनवो भीतेर्भरात्साधवो—

ऽन्योन्याह्वानपराश्च नालमभवन् स्थातुं प्रणष्टुं तथा ॥४१॥

धनच्छन्नमुखे घटे प्रथमतः सज्जीकृते श्रीगुरु— 5

र्दत्त्वा हस्तमथाजपद्गतभयो यावत्स तावच्छठः ।

सर्वाङ्गेऽप्युदितं व्यथासमुदयं हर्तुं विपोढुं प्रणि—

होतुं वाऽप्यसहस्ततोऽनुगजनानूचे म्रिये भो. म्रिये ॥ ४२ ॥

धिक् मामनात्मज्ञमदीर्घदर्शिनं येनाभिमानादपमानितो गुरुः ।

कारणुः क मेरुः क सरः क सागरः काहं हहा कैष च सर्वसिद्धिभृत् ॥४३॥ 10

भीतः सोऽविकलं निजं विलसितं संहृत्य पीडावशा—

दाक्रन्दंश्च कणंश्च तत्र वसतौ गत्वा मुखात्ताङ्गुलिः

ऊचेऽज्ञानवशाद्यदत्र विहितं तत्क्षम्यतां क्षम्यतां

नातो वो विदधामि किञ्चिदशुभं साक्षी जनोऽत्राखिलः॥ ४४ ॥

निरीक्ष्य दीनं स्वपदोर्विलीनं तं योगिराजं सुसमाधिभाजम् । 15

चकार शान्तः प्रभुधर्मघोषः पुण्यप्रभायाश्च बभूव पोषः ॥ ४५ ॥

श्रीसोमप्रभसूरयो ऽजनिपतार्थैकादशाङ्गीस्फुर—

त्सूत्रार्थाः किल कार्त्तिके समधिके कृत्वा चतुर्मासकम्

अन्याचार्यगणे निषेधति भृशं ये भीमपल्या ययु

र्भङ्गं भाविनमेत्य मन्त्रनिवहं नालुर्गुरुभ्यश्च ये ॥ ४६ ॥ 20

तेषां विनेया वरभागधेयाश्चत्वार आसन् स्वगुणैरमेयाः ।

चतुर्गतिभ्योऽसुमतां सुखेनोद्धाराय धर्मस्य वपूंषि किं नु ॥ ४७ ॥

श्रीविमलप्रभुसूरिः श्रीपरमानन्दसूरिगुरुराजः ।

वचनातिगयतनावान् सूरिः श्रीपद्मतिलकगुरुः ॥ ४८ ॥

श्रीसोमतिलकाख्याश्च सूरयो यद्यशोऽर्णवे । 25

ज्योत्स्ना जलं ग्रहाः फेनपिण्डा वेलावलिर्दिशः ॥ ४९ ॥

युग्मम् ॥

विश्वख्याततपागणाधिपतयः सार्वत्रिकख्यातयः,
सद्वैराग्यपयोधयस्त्रिजगतीदीव्यद्गुणश्रेणयः ।
आसन् ग्रन्थकृतः सदागमभृतश्चारित्रलक्ष्मीवृतः
सद्भाग्याभ्यधिकाश्च सामतिलकाः सूरीशवृन्दारकाः ॥ ५० ॥ 5
तेषां शिष्यास्त्रयः ख्याता अभूवन्नद्भुतैर्गुणैः ।
ज्ञानदर्शनचारित्रयी मूर्त्तिमती किल ॥ ५१ ॥
संक्षुब्धसागरगभीररवेण नित्यमावर्जिताखिलजगज्जनमानसालिः ।
श्रीचन्द्रशेखरगुरुर्गरिमैकधाम विद्याविलासवसितः प्रथमो बभूव ॥५२॥
भव्यप्राणिशिवश्रियोः परिणये सांवत्सराधीश्वराः 10
गाम्भीर्यादिगुणैर्निजैरुदधिवत्केनाप्यलब्धान्तराः ।
ते ऽजायन्त यतीश्वराइह जयानन्दा द्वितीयाः क्रमात् ।
येषां देवतया करेण निहतो भ्राता ऽनुमेने व्रतम् ॥ ५३ ॥

वैराग्यं विमलं शमोऽतिविशदः शास्त्रज्ञता चाद्भुता,
सिद्धान्तैकरुचिर्मनोहरतरा भव्योपकारः परः । 15
चारित्रं त्रिजगत्यनुत्तरतमं भाग्यं ह्यसाधारणं,
येषां श्रीयुत देवसुन्दरवराः ख्यातास्तृतीयास्तु ते ॥५४॥

एकद्वित्रिमुखैर्गुणैः कृतमदा देहेऽपि गेहेऽपि ये,
नो मान्ति प्रचुरा नरा जगति ते सन्तु प्रकामं परे ।
ये सर्वेषु गुणेषु सत्स्वपि मदं कुर्वन्ति नो कर्हिचित् । 20
ते ऽमी श्रीयुतदेवसुन्दरवराः सन्त्येक एवावनौ ॥५५॥

न यन्निन्दास्तुती कर्त्तुं शक्येते खल सज्जनैः ।
असद्भावेन दोषाणां गुणानां चाप्रमाणतः ॥५६॥

तच्छिष्याः सूरयः पञ्च मेरुपञ्चकसन्निभाः ।
सुवर्णभरविख्याता विद्यन्ते गरिमास्पदम् ।५७॥ 25

१—यद्वैराग्यमखण्डितं बहुविधं नित्यं तपो यत्परं,
बाहुश्रुत्यमुदारविस्मयकरं यद्यच्च शान्तं मनः ।

योऽन्यो वाऽप्यभवद्गुणो गुरुवरे श्रीज्ञानतः सागरे
तत्सर्वं नहि वीक्ष्यते गणिगणेऽन्यस्मिन् कदाऽपि कचित् ॥५८॥

२—दाक्षिण्यैकपयोधयश्चतुरसच्चेतश्चमत्कृद्गुणाः
सिद्धान्तार्णवगाहनैकरसिका उत्सर्गमार्गाध्वगाः । 5
प्रागल्भ्यप्रवरास्तपोऽभिरताः सन्मत्युदाराशयाः
आसन् श्रीकुलमण्डनाह्वयगुरूत्तंसा द्वितीया इमे ॥५६॥

३—भूतभाविभवत्सूरिक्रमरेणुकणोपमः
सूरिः श्रीगुणरत्नाह्वस्तृतीयः समजायत ॥६०॥

४—श्री सोमसुन्दर इति प्रथिताभिधानाः 10
सौभाग्यभाग्यविशदाः क्षमया प्रधानाः
तुर्याः सुधामधुरिमाञ्चितवाग्विलासाः
सूरीश्वरा गुणिगुणैः कृतनित्यवासाः ॥६१॥

५—श्री साधुरत्नाश्च ततो मुनीन्द्रास्तदद्भुतं यत्सुगुणा यदीयाः ।
नान्यत्र सन्तोऽपि जगज्जनानां सर्वत्र कर्णातिथयो भवन्ति ॥६२॥ 15

काले षड्रस पूर्व १४६६ वत्सरमिते श्रीविक्रमार्काद्गते
गुर्वादेशवशाद्विमृश्य च सदा स्वान्योपकारं परम् ।
ग्रन्थं श्रीगुणरत्नसूरिरतनोत्प्रज्ञाविहीनोऽप्यमुं
निर्हेतूपकृतिप्रधानजननैः शोध्यस्त्वयं धीधनैः ॥ ६३ ॥

---

इति श्रीगुरुपर्वक्रमवर्णनम् 20

अपरनाम श्रीक्रियारत्नसमुच्चयप्रशस्तिः समाप्ता

*श्रीमुनिसुंदरसूरिभिः संदर्शितानि*

# गुर्वावलीपट्टपरंपरासूरिनामानि

१ भगवान महावीर स्वामी
*[ निग्रन्थ गच्छः ]*
२ श्री सुधर्मा स्वामी
३ श्री जंबू स्वामी
४ श्री प्रभव स्वामी
५ श्री शय्यंभव स्वामी
६ श्री यशोभद्र सूरिः
७ श्री संभूति विजयः }
श्री भद्रबाहु स्वामी + }
८ श्री स्थुलभद्र स्वामी
९ श्री आर्य महागीरिः +
९ श्री आर्य सुहस्ति सूरिः
*[ कौटिक गच्छः ]*
१० श्री सुस्थित सूरिः }
श्री सुप्रतिवध्ध सूरिः + }
११ श्री इंद्रदिन्न सूरिः
१२ श्री दिन्न सूरिः
१३ श्री सिंहगिरि सूरिः
१४ श्री वज्र स्वामी
१५ श्री वज्रसेन सूरिः
[ चंद्र गच्छः ]

१६ श्री चन्द्र सूरिः
*[ वनवासी गच्छः ]*
१७ श्री सामन्त भद्र सूरिः
१८ श्री वृध्धदेव सूरिः
१९ श्री प्रद्योतन सूरिः
२० श्री मानदेव सूरिः
२१ श्री मानतुंग सूरिः
२२ श्री वीर सूरिः
२३ श्री जयदेव सूरिः
२४ श्री देवानंद सूरिः
२५ श्री विक्रम सूरिः
२६ श्री नरसिंह सूरिः
२७ श्री समुद्र सूरिः
२८ श्री मानदेव सूरिः
२९ श्री विबुधप्रभ सूरिः
३० श्री जयानंद सूरिः
३१ श्री रविप्रभ सूरिः
३२ श्री यशोदेव सूरिः
३३ श्री प्रद्युम्न सूरिः
३४ श्री मानदेव सूरिः +
३५ श्री विमलचंद्र सूरिः +

३६ श्री उद्योतन सूरिः

[ वडगच्छः ]

३७ श्री सर्वदेव सूरिः

३८ श्री देव सूरिः

३९ श्री सर्वदेव सूरिः

४० श्री यशोभद्र सूरिः }
श्री नेमिचंद्र सूरिः }

४१ श्री मुनिचंद्र सूरिः

४२ श्री अजितदेव सूरिः

४३ श्री विजयसिंह सूरिः

४४ श्री सोमप्रभ सूरिः

श्री मणिरत्न सूरिः

[ तपागच्छः ]

४५ श्री जगच्चंद्र सूरिः

४६ श्री देवेंद्र सूरिः

श्री विजयेन्दु सूरिः

४७ श्री विद्यानन्द सूरिः

श्री धर्मघोष सूरिः

४८ श्री सोमप्रभ सूरिः

( ४९ ) श्री विमलप्रभ सूरिः

( ,, ) श्री परमानंद सूरिः 5

( ,, ) श्री पद्मतिलक सूरिः

४९ श्रीसोमतिलकसूरिः ‡

( ५० ) श्री चंद्रशेखर सूरिः

( ,, ) श्री जयानंद सूरिः +

५० श्री देवसुंदर सूरिः + 10

( ५१ ) श्री ज्ञानसागर सूरिः

( ,, ) श्री कुलमंडन सूरिः

( ,, ) श्री गुणरत्न सूरिः

५१ श्री सोमसुंदर सूरिः

( ,, ) श्री साधुरत्न सूरिः 15

५२ श्री मुनिसुंदर सूरिः

---

(          ) एतेषां पट्टपरंपरा गुर्वावल्यां संदर्भिता नोपलभ्यते ।

‡ एतेषां चत्वारः पट्टधरा आसन् ! इति तपागच्छपट्टावलीसूत्रे ।

+ केषांचित् मते श्रीभद्रबाहुस्वामियुग्म—आर्यमहागिरिसुहस्तियुग्म—श्रीसुस्थित-सूरियुग्मानां एकपट्टगणने चंद्रसूरेरंकः १६, अन्येषां मते पृथक्पृथक्गणने अंकः १९ ॥ अनया गणनया बृहद्गच्छादिमाचार्यश्रीसर्वदेवसूरेरंकौ ३५,३८ । श्रीप्रद्युम्नसूरि—श्रीमान-देवसूरिद्वयोरपि पट्टगणनेऽङ्कौ ३७,४० ॥ अतः देवसुंदरसूरेरपिपट्टांकाः ४८,५०,५१,५२ । श्रीजयानंदसूरेरपि पट्टगणने अंकः ५४ ॥ (४५) श्री जगच्चंद्रसूरेरारभ्य विशिष्ट-गणनयात् श्रीदेवसुंदरसूरेः ५०,५६,६१ अपि अंकाः । किंतु संततिगणनया ५० एव ॥

—इति मतांतराणि ५९, ४८५, ४८६, ४८७ श्लोकेषु ।

५२—श्रीमुनिसुंदरसूरिभिः विक्रमीय १४६६ वर्षे ४९६ पद्यदेहा गुर्वावली गुंफितास्ति, तस्याः पट्टपरंपरा एवात्र मुद्रितास्ति ॥

# श्रीसोमसौभाग्य-पट्टावली

[ कर्ता—मुनिश्रीप्रतिष्ठासोमः ]

ततो गणः शिष्यततो वटाख्याख्यातोऽभवत्क्वापि बृहद्गणाह्वः ।
तस्मिंश्च गच्छे प्रवरेषु भूरिसूरिष्वतीतेषु बहुश्रुतेषु ॥२३॥
श्रीमान् जगचन्द्र इति प्रतीतनामा सुधामाजनि सूरिराजः ।
षट्त्रिंशदाचार्यगुणाः गणेंद्रं तं शिश्रियुः प्रेमभरप्रगुणाः ॥२४॥ युग्मम्
स्वगोभरैर्ध्वस्तसमस्तपापतमाः क्षमादर्शितपुण्यमार्गः । 5
जगज्जनानां प्रमदं वितन्वन् श्रीचन्द्रवद्योऽजनि सार्थकाह्वः ॥२५॥
वैराग्यवान् द्वादश हायनान्याचामाम्लनिर्माणतपो ह्यतप्त ।
यो दुस्तपं तेन तपागणेति गणस्य सत्ख्यातिरभूत् क्षमायां ॥२६॥
श्रीमज्जगच्चन्द्रगुरोर्विनेयस्त्वमेयसद्गेयगुणैर्विनिद्रः ।
देवेंद्रमर्त्येंद्रमुनींद्रवंद्यो देवेंद्रसूरिः समभूत् प्रभाढ्यः ॥२७॥ 10
व्याख्याकलां यस्य कलां विलोक्य श्रीवस्तुपालादिमहेभ्यसभ्याः ।
के घूर्णयन्ति स्म न पूर्णचित्ताः शीर्षाणि हर्षेण च विस्मयेन ॥२८॥
कर्मसरूपप्रथनाढ्य कर्मग्रंथादिसद्ग्रंथविधानवेधाः ।
मेधाप्रधानो जगतां गतांहा व्यभासयज्जैनमतं मतं यः ॥२९॥
संशुद्धसाधुस्थितिदुर्गमार्गं प्ररूपयंश्चारु समाचरंश्च । 15
अनल्पसंकल्पितदानकल्पद्रुमो ऽभवद्यो जिनकल्पिकल्पः ॥३०॥
ख्यातो दिगंते वितते तदंतेवासी स्वदासीकृतदेवसूरिः ।
निस्सीमगंभीरिमहृद्यविद्यानंदाह्वसूरींद्र इहाबभासे ॥३१॥
अनोकहं नव्यलताः श्रिता वा सरित्पतिं वा सरितस्तता वा ।
मरालबाला इव मानसं वा यं हृद्यविद्या हि तथा प्रथाढ्याः ॥३२॥ 20

सुधर्मश्रीजंबूप्रभृतिसुगुरून् धीधनगुरून् ।
महौन्नत्यान् नित्याभ्युदयजयसत्कीर्तिकलितान् ।
दृशोऽतीतान् स्फीतान् नयति यतिराट् यः स्मृतिपथम् ।
गुणैश्चंद्रोन्निद्रैर्गिरिशगिरिशुभ्रैरिह शुभैः ॥ ४७ ॥

सदर्पः कंदर्पः प्रसृमरभुजौजाः स समरे 5
ऽवधि क्रोधो योधो निकृतिमदमात्सर्यसहितः ।
जयानंदश्रीमद्गुरुभिरपरेऽपीह रिपवो
ऽन्तरंगास्तेऽखर्वास्सपदि हृतगर्वा विदधिरे ॥ ४८ ॥

ये श्रीमद्गुरवो रवोर्जितजितप्रावृट्घनाः श्रीघनाः
श्रीमद्गौतमसंनिभा हृदि निभान्मुक्ताश्च युक्ता गुणैः । 10
विश्वं कीर्तिजलैः समुज्ज्वलतरैः प्रक्षालयंतः स्फुर—
न्मूर्तिस्फूर्तिजुपः सृजंति सुकृतश्रीप्राज्यराज्यं क्षितौ ॥ ४९ ॥

इति श्री युगप्रधानावतारश्रीबृहत्तपागच्छश्रृंगारहारभट्टारकपुरं—दरपूज्यश्रीसोमसुंदरसूरिसौभाग्यवर्णने सोमसौभाग्यनाम्नि काव्ये श्रीतपा-गच्छपूर्वाचार्यसंहतिप्रकटनो नाम तृतीयः सर्गः ॥ ३ ॥ 15

अथ अनुपूर्तयः—

स्वर्गं ययुर्यंयुचलेंद्रियजिज्जयाद्याऽऽनंदाह्वसूरिमुकुटाः प्रकटाभिधानाः ॥
श्रीदेवसुंदरगुरुप्रभवोऽभवंश्च, श्रीगच्छनायकतया विदितास्तदानीं ॥
—सर्ग ४ श्लो० १

अद्रीश्वराग्न्यंबुधिचंद्रसंमिते, भृते प्रमोदप्रकरेण वत्सरे ॥ 20
समं भगिन्या गिरिदेवताद्युता, सोमेन दीक्षा जगृहे महामहैः ॥
श्रीसोमसुंदरमुनिस्त्विति नाम धाम,श्रेयःश्रियां वितरतिस्म यतीश्वरोऽसौ ॥
सोमाभिधानपुरुपप्रवरस्य तस्य, दीव्यद्गुणैः प्रसृमरस्य नतामरस्य ॥
( दीक्षा वि० सं० १४३७ ) सर्ग ४, श्लो० ५९-६०,

श्रीवाचकोतमपदं खशराब्धिचंद्रसंवत्सरे विगतमत्सरचित्तवृत्तेः ॥ 25
अब्दैः समस्य समभूत् नखसंमिताब्दे
शाब्देन सन्मधुरिमाऽतिशयेन तस्य ॥ १ ॥

श्रीसोमसुंदरगुणाद्भुतवाचकेंद्राः केंद्रास्पदाश्रितशुभग्रहशुद्धलग्ने ॥
संस्थापिताः किल तदैव सदैव पुण्याः,
प्राचीं दिशं प्रति विनेययुता विजह्रुः ॥ २ ॥
श्रीदेवसुंदरगुरुर्गरिमाभिरामः, श्रीवाचकस्य कलिशत्रुभयानकस्य ॥
कर्णेसकर्णमुकुटस्य 'स' सूरिमंत्रं, संन्यस्यतिस्म भुवि विस्मयकारिशक्ति॥३ 5
वर्षे कुलाचलशिलीमुखवारिराशिपीयुपदीधितिमितेऽप्रमिते प्रमोदैः ॥
श्रीसोमसुंदरगुणोज्वलवाचकानामाचार्यवर्यपदमद्भुतकारि जज्ञे ॥४॥
( वाचकपदं वि० सं० १४५०, सूरिपदं वि० सं० १४५७ )
सर्ग ५, श्लो० १४, १५, ५०, ५१,
स्वर्गंगते सद्गुणसंगते श्री—वृहद्गुरौ जज्ञुरथो प्रथाढ्याः ॥ 10
श्रीगच्छनाथा महसा सनाथाः, श्रीसोमयुक् सुंदर सूरिराजाः ॥
सर्ग—६, श्लोक—१
स्वच्छे श्रीयुतसोमसुंदरगुरोर्गच्छे ऽप्यतुच्छे गुणैः ।
संख्या नो वरिवर्ति पंडितगणिक्षुल्लादिसंख्यावृताम् ॥
रत्नानामिव कांतकांतिसजुषां रत्नाकरस्य स्फुर— 15
त्ताराणां च यथापृथुद्युतिभृतां श्रीतारकाधीशितुः ॥ १ ॥
× सर्ग—१०, श्लोकः ६४,

---

× श्रीसोमसुंदरसूरीणां बहवः पट्टधरा वाचकाः शिष्याश्चासन् तेषु केषांचिद् नामानि यथा—श्रीमुनिसुंदरसूरिः, कृष्णसरस्वतीश्रीजयसुंदरसूरिः, श्रीभुवनसुंदरसूरिः एकादशांगसूत्रार्थधारकश्रीजिनसुंदरसूरिः, जिनकीर्तिसूरिः, श्रेष्ठिगोविंदकृतपदोत्सव; श्रीविशालराजसूरिः, महादेवश्रेष्ठिकृतपदोत्सवो दक्षिणदिग्वादिजेता श्रीरत्नशेखरसूरिः, गंधारनगरश्रेष्ठिलक्षसंघपतिकृतपदोत्सवः श्रीउदयनंदिसूरिः, रत्नशेखरसूरिशिष्यलक्ष्मीसागरसूरिः, महावादी समर्थव्याख्याता मेवाडाधिपतिकुंभकर्ण—जीर्णदुर्गाधिपतिमंडलिक—चांपानेराधिपतिजयसिंहपूजितः समर्थकविः श्रीसोमदेवसूरिः, रत्नमंडनसूरिः, सप्तनयरहस्यज्ञाता श्रीरत्नमंडनसूरिः, शुभरत्नसूरिः, महातार्किकसोमजयसूरिः। उपाध्यायसाधुराजः, महोपाध्यायजिनमंडनः मुख्यशिष्यकृष्णसरस्वतीउपाध्यायश्रीचारित्ररत्नः, उपाध्यायसत्यशेखरः, वादीज्वरधन्वंतरी उपाध्याय श्रीहेमहंसः । दक्षिणदिग्वादिजेता पं०

वर्षे नंदनिधानवारिधिहिमज्योतिर्मिते स्वर्ययुः ।
केचित् सातिशया वदंत्विति मुनिश्रेष्ठा गरिष्ठा धिया ॥
श्रीसीमंधरतीर्थनाथचरणांभोरुट्पवित्रीकृते ।
जाताः　पूर्वमहाविदेहनगरे　ते सूरयः सत्कुले ॥१॥
( वि० सं० १४९९ स्वर्गमनं ) सर्ग-९ श्लोक १०९　5

श्रीसोमसुंदरयुगोत्तमसूरिपट्टे, श्रीमान् रराज मुनिसुंदरसूरिराजः ॥
श्री सूरिमंत्रवरसंस्मरणैकशक्ति-र्यस्याऽभवद् भुवनविस्मयदानदक्षा ॥१॥
श्रीरोहिणीति विदिते नगरे ततीति पश्चात्कृतेः किल चमत्कृतहृत्पुरेशः ।
ऊरीचकार मृगयाकरणे निषेधं, प्रावर्तयन्निखिलनीवृति चाप्यमारिं ॥२॥
प्रागेव देवकुलपाटकपत्तने यो, मारेरुपद्रवदलं दलयांचकार ॥　10
श्रीशांतिकृत्स्तवनतोऽवनतोत्तमांग-भूपालमौलिमणिघृष्टपदारविंदः ॥३॥
श्रीमानदेवशुचिमानसमानतुङ्ग-मुख्यान् प्रभावकगुरून् स्मृतिमानयद्यः ॥
श्रीशासनाऽभ्युदयदप्रथितावदातै-स्तैस्तैश्चमत्कृतिकरैः कुमुदावदातैः ॥४॥

पारावारकरस्मरेपुहिमरुक्वर्पेति हर्पाद् व्यधात् ।
विज्ञानां हृदयंगमं च सुगमं क्लृप्तेंदिरासंगमम् ॥　15
काव्यं नव्यमिदं विदंभहृदयः शिष्यः प्रतिष्ठादिमः ।
सोमः श्रीयुतसोमसुंदरगुरोर्मेरोर्गरिम्णः श्रिया ॥

( रचना वि० सं० १५२४ ) सर्ग १०, श्लो० १, २, ३, ४, ७३,

इति समाप्तमिदम्

---

विवेकसागरः, श्रीदक्षिणदिग्वादिजेता राजवर्धनः, श्रीचारित्रराजः, वादीश्रीपुण्यराजः, श्रीश्रुतशेखरः, श्रीवीरश्रुतशेखरः, श्रीसोमशेखरः, श्रीज्ञानकीर्तिः, श्रीशिवमूर्तिः, श्रीधर्ममंडनः, ज्योतिर्विद् श्रीहर्षमूर्तिः, श्रीहर्षकीर्तिः, श्रीहर्षभूषणः, श्रीहर्षवीरः, गणितज्ञः श्रीविजयशेखरः, संस्कृतजल्पपटुश्रीअमरसुंदरः, महावैयाकरणो लक्ष्मीभद्रः, वादीश्रीसिंहदेवः, प्रवरव्याख्याताररत्नप्रभः, श्रीशीलभद्रः, दुर्गमशास्त्रज्ञनंदिधर्मः, शांतिजिनैकस्मरणमहातपस्वी शांतिचंद्रगणिः, पंचाशत्क्षपणादिदुःस्तपतपःकर्ता विनयसिंहगणिः, महाशब्दैः स्वाध्यायकारको हर्षसेनगणिः, नित्यैकभक्तपानग्राहक आतापनातत्परः श्रीहर्षसिंहगणिः, श्रीप्रतिष्ठासोमः ॥ इति सोमसौभाग्यकाव्ये दशमस्वर्गे

अस्य सूरेः १८०० साधूनां परिवारः ॥ इति तपागच्छपट्टावलीसूत्रे

# श्रीतपागच्छपट्टावली सूत्रम्

*स्वोपज्ञया वृत्या समलंकृतम्*

*( कर्ता—महोपाध्यायश्रीधर्मसागरगणिः )*

॥६०॥ तपागच्छाधिराजश्रीहीरविजयसूरिगुरुभ्यो नमः ।

अथ गुरुपरिपाटीकथनाय संगतिमाह ।

*सिरिमंतो सुहहेऊ, गुरुपरिवाडीइ आगओ संतो ॥*

*पज्जोसवणाकप्पो, वाइज्जइ तेण तं वुच्छं ॥१॥* 5

व्याख्या—सिरमंत्तोत्ति, यत्तदोर्नित्याभिसंबंधात् येन कारणेन श्रीमान् सश्रीकः श्रियां मंत्रो वा पर्यपणाकल्पो गुरुपरिपाट्या समागतः सन् वाच्यते । उपलक्षणात् श्रूयते च । किंलक्षणः! शुभहेतुः स्वर्गापवर्गकारणं । तेन कारणेनाहं तां गुरुपरिपाटीं वक्ष्ये इत्यन्वयः । श्रीमानिति विशेषणं तीर्थंकरचरित्रस्थविरावलीनामकीर्तनपुरस्सरं साध्वाचारप्रतिपादनेन सर्वे- 10 ष्वपि मंगलभूतेषु श्रुतेषु सश्रीकत्वमस्यैवेति ख्यापनपरमिति । गुरुपरिपाट्यागत इति च विशेषणं । गुरुपरिपाट्यागतयोगाद्यनुष्ठानविधिनैव वाच्यमानः । एगग्गचित्ताजिणसासणम्मि, पभावणापूअपरायणा जे । इत्यादि विधिना च श्रूयमाणः शुभहेतुर्मोक्षफलहेतुर्नान्यथेति ज्ञापनपरमिति गाथार्थः ॥१॥

*गुरुपरिवाडीमूलं, तित्थयरो वध्धमाणनामेणं ॥* 15

*तप्पट्टोदयपढमो, सुहम्मनामेण १ गणसामी ॥२॥*

*श्रीवर्धमानतीर्थंकरः ॥ १—तत्पट्टे श्रीसुधर्मस्वामी ॥*

व्याख्या—गुरुपडिवाडिन्ति, गुरुपरिपाट्या मूलमाद्यं कारणं वर्धमाननाम्ना तीर्थंकरः । तीर्थंकृतो हि आचार्यपरिपाट्या उत्पत्तिहेतवो भवंति नपुनस्तदंतर्गताः । तेषां स्वयमेवतीर्थप्रवर्तनेन कस्यापि पट्टधरत्वाभावात् ॥ 20

१ तस्मात् श्रीमहावीरस्य पट्टे उदये च प्रथमः श्रीसुधर्मस्वामी पंचमो गणधरः। सच किंलक्षणो ? गणस्वामी यत एकादशानामपि गणधरपदस्थापनावसरे श्रीवीरेण श्रीसुधर्मस्वामिनं पुरस्कृत्य गणोऽनुज्ञातः दुष्प्रसहं यावत् श्रीसुधर्मस्वाम्यपत्यानामेव प्रवर्तनात् ॥ तत्पट्टोदयेत्यत्रोदयपदं प्रथमोदयस्यापि प्रथमाचार्यः श्रीसुधर्मेति सूचकं ॥ स च पंचाषद्वर्षाणि५०गृहस्थपर्याये, त्रिंशद्वर्षाणि ३० श्रीवीरसेवायां, वीरे निर्वृते वा द्वादशवर्षाणि १२ छाद्मस्थ्ये, अष्टौ ८ वर्षाणि केवलिपर्याये चेति, सर्व्वायुः शतमेकं १०० परिपाल्य श्रीवीराद्विंशत्या २० वर्षैः सिध्धिं गतः॥ श्रीवीरज्ञानोत्पत्तेश्चतुर्दश१४वर्षे जमालिनामा प्रथमो निह्नवः । षोडश१६वर्षे तिष्यगुप्तनामा द्वितीयो निह्नवः॥ २ ॥ 10

*बीओ जंबू २ तईओ, पभवो ३ सिज्जंभवो चउत्थो ४ अ*
*पंचमओ जस भद्दो ५, छट्ठो संभूय-भद्दगुरू ६ ॥३॥*
*२-तत्पट्टे श्रीजंबूस्वामी ॥ ३-तत्पट्टे श्रीप्रभवस्वामी ॥*
*४-तत्पट्टे श्रीशय्यंभवस्वामी ॥ ५-तत्पट्टे श्रीयशोभद्रस्वामी ॥*
*६-तत्पट्टे श्रीसंभूतविजयश्रीभद्रबाहुस्वामिनौ ॥* 15

व्याख्या-२-बीओ जंबूत्ति, श्रीसुधर्म्मस्वामिपट्टे द्वितीयः श्रीजंबूस्वामी। सच नवनवतिकोटिसंयुक्ता अष्टौ कन्यकाः परित्यज्य श्रीसुधर्म्मस्वाम्यंतिके प्रव्रजितः । स च षोडश१६वर्षाणि गृहस्थपर्याये, विंशतिवर्षाणि २० व्रतपर्याये, चतुश्चत्वारिंशद्वर्षाणि ४४ युगप्रधानपर्याये चेति, सर्वायुरशीतिवर्षाणि ८० परिपाल्य श्रीवीरत् चतुःषष्टि ६४ 20 वर्षैः सिद्धः॥ अत्र कविः-

मत्कृते जंबुना त्यक्ता, नवौढा नवकन्यकाः।
तन्मन्ये मुक्तिवध्वाऽन्यो, नवृतो भारतो नरः॥ १ ॥
चित्तं न नीतं वनिताविकारै-र्वित्तं न नीतं चतुरैश्च चौरैः॥
यद्देहगेहे द्वितयं निशीथे,जंबूकुमाराय नमोस्तु तस्मै ॥ २ ॥ 25

मण १ परमोहि २ पुलाए ३, आहार ४ खवग ५ उवसमे ६ कप्पे, ॥
संजमतिग ८ केवल ९ सि—ज्झणा य १० जंबुम्मि वुच्छिण्णा ॥१॥

३—तईओत्ति, श्रीजंबूस्वामिपट्टे तृतीयः श्रीप्रभवस्वामी। स च त्रिंशद्वर्षाणि ३० गृहस्थपर्याये, चतुश्चत्वारिंशत् ४४ वर्षाणि व्रतपर्याये, एकादश ११ युग०चेति। सर्वायुः पंचाशीति८५वर्षाणि परिपाल्य, श्रीवीरात् 5 पंचसप्तति७५वर्षातिक्रमे स्वर्गभागिति ॥छ॥

४—सिज्जंभवोत्ति, श्रीप्रभवस्वामिप्रहितसाधुमुखात् "अहोकष्टमहोकष्टं तत्वं न ज्ञायते परम्" इत्यादि वचसा यज्ञस्तंभादधःश्रीशांतिनाथबिंबदर्शनादवाप्तधर्मा प्रव्रज्य, क्रमेण मनकनाम्नः स्वसुतस्य निमित्तं दशवैकालिकं कृतवान्। यतः— 10

कृतं विकालवेलायां, दशाध्ययनगर्भितम्।
दशवैकालिकमिति—नाम्ना शास्त्रं बभूव तत् ॥ १ ॥
अतःपरं भविष्यंति, प्राणिनो ह्यल्पमेधसः।
कृतार्थास्ते मनकवत्, भवतु त्वत्प्रसादतः ॥ २ ॥
श्रुतांभोजस्य किंजल्कं, दशवैकालिकं ह्यदः। 15
आचंम्पाचम्पमोदन्ता—मनगारमधुव्रताः ॥ ३ ॥
इति संघोपरोधेन, श्रीशय्यंभवसूरिभिः ॥
दशवैकालिको ग्रंथो, न संवव्रे महात्मभिः ॥४॥ इति।

स चाष्टाविंशति२८वर्षाणि गृहस्थपर्याये, एकादश११व्रते, त्रयोविंशति२३युगप्र०चेति सर्वायुर्द्वाषष्टि६२वर्षाणि परिपाल्य। श्री वीरादष्ट- 20 नवति९८ वर्षातिक्रमे स्वर्गभाक् ॥छ॥

५ पंचमओत्ति, श्रीशय्यंभवस्वामिपट्टे पंचमः श्री यशोभद्रस्वामी। स च द्वाविंशति२२वर्षाणि गृहे, १४ व्रते, पंचाशत्५०व० युग० सर्वायुः षडशीति८६वर्षाणि परिपाल्य। श्रीवीरादष्टचत्वारिंशदधिके शते १४८- ऽतिक्रांते स्वर्गभाक् ॥ छ ॥ 25

६-छट्ठा संभूयत्ति, श्रीयशोभद्रस्वामिपट्टे षष्ठौ पदैकदेशे पदसमुदायोपचारात् संभूतेति, श्रीसंभूतिविजयः भद्दत्ति, श्रीभद्रबाहुस्वामी त्युभावपि षष्ठपट्टधरावित्यर्थः ॥ तत्र श्री संभूतिविजयो द्विचत्वारिंशत्४२व० गृहे, चत्वारिंशत्४०व्रते, अष्टौ ८ युग० चेति, सर्वायुर्नवति९०वर्षाणि परिपाल्य स्वर्गभाक् ॥ 5

श्रीभद्रबाहुस्वामी तु श्री आवश्यकादिनिर्युक्तिविधाता । व्यंतरीभूतवराहमिहिरकृतसंघोपद्रवनिवारकोपसर्गहरस्तवनेन प्रवचनस्य महोपकारं कृत्वा पंचचत्वारिंशत्४५गृहे, सप्तदश १७ व्रते, चतुर्दश१४युगप्र० चेति सर्वायुः षट्सप्तति७६वर्षाणि परिपाल्य श्रीवीरात् सप्तत्यधिकशत१७०व० स्वर्गभाक् । छ । ॥३॥ 10

*सिरिथूलभद्द सत्तम ७, अट्ठमगा महागिरी-सुहत्थी ८ अ ॥*
*सुट्ठिअ-सुप्पडिबद्द, कोडिअकाकंदिगा नवमा ९ ॥४॥*
*७-तत्पट्टे श्रीथूलभद्रस्वामी ॥ ८-तत्पट्टे श्रीआर्यमहागिरि-श्रीआर्यसुहस्तिनौ ॥९-श्रीआर्यसुहस्तिपट्टे श्रीसुस्थितसुप्रतिबद्धौ ॥*
15

व्याख्या-७—सिरिथूलभद्दत्ति, श्रीसंभूतविजय-भद्रबाहुस्वामिनोः सप्तमपट्ट श्रीस्थूलभद्रस्वामी कोशाप्रतिबोधजनितयशोधवलीकृताखिलजगत् सर्व्वजनप्रसिद्धः । चतुर्दशपूर्वविदां पश्चिमः । क्वचिच्चत्वार्यन्त्यानि पूर्वाणि सूत्रतोऽधीतवानित्यपि । स च त्रिंशत्० ३० गृहे, चतुर्विंशतिर२४व्रते, पंचचत्वारिंशत्४५युगप्रधाने, सर्वायुर्नवनवति९९वर्षाणि परिपाल्य श्रीवीरात् पंचदशाधिकशतद्वय२१५वर्षे स्वर्गभाक् ॥ अत्र कविः— 20

श्रीनेमितोपि शकटालसुतं विचार्य, मन्यामहे वयममुं भटमेकमेव ॥
देवोऽद्रिदुर्गमधिरुह्य जिगाय मोहं, यन्मोहनालयमयं तु वशी प्रविश्य॥१॥

श्रीवीरनिर्वाणात् चतुर्दशाधिकवर्षशतद्वये २१४ आषाढाऽऽचार्यात् अव्यक्त नाम तृतीयो निह्नवः ॥छ॥

८-अट्ठमगत्ति, श्रीस्थूलभद्रपट्टेऽष्टमौ पट्टधरौ श्रीआर्यमहागिरिः श्रीसुहस्ती चेत्युभावपि गुरुभ्रातरौ । तत्र श्रीआर्यमहागिरिर्जिनकल्पिकतुलनामारूढो, जिनकल्पिककल्पः । त्रिंशत् ३० गृहे, चत्वारिंशत् ४० व्रते, त्रिंशत् ३० युग०, सर्वायुः शत १०० व० परिपाल्य स्वर्गभाक् ॥

द्वितीयेनाऽऽर्यसुहस्तिना पूर्वभवे द्रमकीभूतोपि संप्रतिजीवः प्रव्राज्य 5 त्रिखंडाधिपतित्वं प्रापितः । येन संप्रतिना त्रिखंडमितापि मही जिनप्रासादमंडिता विहिता साधुवेषधारिनिजवंठपुरुषप्रेषणेनाऽनार्यदेशेपि साधुविहारः कारितः ॥ सच आर्यसुहस्ती त्रिंशत्३०गृहे, चतुर्विंशति२४व्रते, षट्चत्वारिंशत् ४६ युग प्र० सर्वायुः शतमेकं १०० परिपाल्य श्रीवीरात् एकनवत्यधिकशतद्वये २६१ स्वर्गभाक् ॥ 10

यद्यपि श्रीस्थूलभद्रस्य पंचदशाधिकशतद्वय२१५वर्षे स्वर्गो गुर्वावल्यनुसारेणोक्तः । श्रीमहागिरि-सुहस्तिनौ तु त्रिंशत्३०वर्षगृहस्थपर्यायावपि शत१००वर्षजीविनौ दुष्षमासंघस्तोत्रयंत्रकानुसारेणोक्तौ ॥ तथा च सति श्रीआर्यसुहस्ती श्रीस्थूलभद्रदीक्षितो न संपद्येत, तथापि गृहस्थ पर्यायवर्षाणि न्यूनानि व्रतवर्षाणि वाधिकानीति विभाव्य घटनीयमिति ॥ 15

तथा श्रीसुहस्तिदीक्षिताऽवंतिसुकुमालस्मृतिस्थाने तत्सुतेन देवकुलं कारितं तस्य च " महाकाल " इति नाम संजातं ।

श्रीवीरनिर्वाणात् विंशत्यधिकवर्षशतद्वये २२० अश्वमित्रात् सामुच्छेदिकनामा चतुर्थो निह्नवः । तथा अष्टविंशत्यधिकशतद्वये २२८ गंगनाम्ना द्विक्रियः पंचमो निह्नवः ॥ छ ॥ 20

९-सुट्ठिअत्ति, श्री सुहस्तिनः पट्टे नवमौ श्रीसुस्थित-सुप्रतिबद्धौ, कोटिक-काकंदिकौ । कोटिशःसूरिमंत्रजापात् कोट्यंशसूरिमंत्रधारित्वाद्वा । ताभ्यां कौटिक नाम्ना गच्छोऽभूत अयं भावः-श्रीसुधर्मस्वामिनोऽष्टौसूरीन् यावत् निर्ग्रंथाः साधवोऽनगारा इत्यादि सामान्यार्थाभिधायिन्याख्याऽऽसीत् नवमे च तत्पट्टे कौटिका इति विशेषार्थाववोधकं द्वितीयं नाम 25 प्रादुर्भूतं ॥

श्रीआर्यमहागिरेस्तु शिष्यौ वहुल-वलिस्सहौ यमलभ्रातरौ-तस्य वलिस्सहस्य शिष्यः स्वातिः तत्वार्थादयोग्रंथास्तु तत्कृता एव संभाव्यंते ।

तच्छिष्यः श्यामाचार्यः प्रज्ञापनाकृत् । श्रीवीरात् षट्सप्तत्यधिकशतत्रये ३७६ स्वर्गभाक् ॥ तच्छिष्यः सांडिल्यो जीतमर्यादाकृदिति नंदिस्थविरावल्यामुक्तमस्ति । परं सा पट्टपरंपराऽन्येति बोध्यं ॥४॥ 5

*सिरिइंददिन्नसूरी, दसमो १० इक्कारसो अ दिन्नगुरू ११॥*

*बारसमो सीहगिरी १२, तेरसमो वयरसामि गुरू १३॥५॥*

*१०-तत्पट्टे श्री इंद्रदिन्नसूरिः ११-तत्पट्टे श्रीदिन्नसूरिः ॥*

*१२-तत्पट्टे श्रीसीहगिरिः ॥ १३-तत्पट्टे श्री वज्रस्वामी ॥*

व्याख्या-१० सिरि इंदत्ति, श्री सुस्थित-सुप्रतिवद्धयोः पट्टे दशमः 10 श्रीइन्द्रदिन्नसूरिः ॥ अत्रांतरे श्रीवीर० त्रिपंचाशदधिकचतुःशतवर्षातिक्रमे ४५३ गर्दभिल्लोच्छेदी कालकसूरिः ॥ श्री वी० त्रिपंचाशदधिकचतुःशत व०४५३ भृगुकच्छे आर्यखपुटाऽऽचार्य इति पट्टावल्यां । प्रभावकचरित्रे तु चतुरशीत्यधिकचतुःशत४८४वर्षे आर्यखपुटाचार्यः ॥ सप्तषष्ट्यधिक चतुःशत४६७वर्षे आर्यमंगुः ॥ वृद्धवादी पादलिप्तश्चात्र । तथा सिद्धसेन 15 दिवाकरो, येनोज्जयिन्यां महाकालप्रसादरुद्रलिंगस्फोटनं विधाय कल्याणमंदिरस्तवेन श्रीपार्श्वनाथबिंबं प्रकटीकृतं, श्रीविक्रमादित्यश्च प्रतिबोधितस्तद्राज्यं तु श्रीवीर० सप्ततिवर्षशतचतुष्टये ४७० संजातं । तानि वर्षाणि चैवम्—

जं रयणिं कालगओ, अरिहा तित्थंकरो महावीरो । 20

तं रयणिं अवणिवई, अहिसित्तो पालओ राया ॥१॥

सट्ठी पालयरण्णो६०, पणवण्णसयं तु होइ नंदाणं १५५॥

अट्ठसयं मुरियाणं १०८, तीस चिअ पूसमित्तस्स ३० ॥ २ ॥

वलमित्त-भाणुमित्ता, सट्ठी ६० वरिसाणि चत्त नहवाणे ४० ॥

तह गद्दभिल्लरज्जं, तेरस १३ वरिस सगस्स चउ (वरिसा) ४ ॥ ३ ॥छ॥ 25

११-इक्कारसोत्ति, श्रीइन्द्रदिन्नसूरिपट्टे एकादशः श्रीदिन्नसूरिः ॥छ॥

१२-बारसमोत्ति, श्रीदिन्नसूरिपट्टे द्वादशमः श्रीसीहगिरिः ॥छ॥

१३--तेरसमोत्ति, श्रीसीहगिरिपट्टे त्रयोदश: श्रीवज्रस्वामी। यो बाल्यादपि जातिस्मृतिभाग्, नभोगमनविद्यया संघरक्षाकृत्, दक्षिणस्यां बौद्धराज्ये जिनेन्द्रपूजानिमित्तं पुष्पाद्यानयनेन प्रवचनप्रभावनाकृत् देवाभिवंदितो दशपूर्वविदामपश्चिमो वज्रशाखोत्पत्तिमूलं॥ तथा स भगवान् षण्णवत्यधिकचतुःशत४९६वर्षांते जातः सन् अष्टौ ८ वर्षाणि गृहे, 5 चतुश्चत्वारिंशत् ४४ वर्षाणि व्रते. षट्त्रिंशत्३६वर्षाणि युगप्र० सर्वायुरष्टाशीति८८वर्षाणि परिपाल्य, श्री वीरात् चतुरशीत्यधिकपंचशत५८४ वर्षान्ते स्वर्गभाक्॥ श्रीवज्रस्वामिनो दशपूर्व-चतुर्थसंहनन-संस्थानानां व्युच्छेदः।

चतुष्कुलसमुत्पत्ति—पितामहमहं विभुं 10
दशपूर्वविधिं वंदे, वज्रस्वामिमुनीश्वरं॥१॥

अत्र श्रीआर्यसुहस्तिश्रीवज्रस्वामिनोरंतराले १ श्रीगुणसुंदरसूरिः, २ श्रीकालिकाचार्यः ३ श्रीस्कंदिलाचार्यः ४ श्रीरेवतीमित्रसूरिः ५ श्रीधर्मसूरिः ६ श्रीभद्रगुप्ताचार्यः ७ श्रीगुप्ताचार्यश्चेति क्रमेण युगप्रधानसप्तकं बभूव। तत्र श्रीवीरात् त्रयस्त्रिंशदधिकपंचशत५३३वर्षे श्रीआर्यरक्षितसूरिणा श्रीभद्र- 15 गुप्ताचार्यो निर्यामितः स्वर्गभागिति पट्टावल्यां दृश्यते। परं दुष्षमासंघस्तवयंत्रकानुसारेण चतुश्चत्वारिंशदधिकपंचशत५४४वर्षातिक्रमे श्रीआर्यरक्षितसूरीणां दीक्षा विज्ञायते तथा चोक्तसंवत्सरे निर्यापणं न संभवतीत्येतद्बहुश्रुतगम्यं॥

तथाऽष्टचत्वारिंशदधिकपंचशतवर्षांते ५४८ त्रिराशिकजित् श्रीगुप्त- 20 सूरिः स्वर्गभाक्॥ तथा श्रीवीरात् सपादपंचशत५२५वर्षे श्रीशत्रुंजयोच्छेदः सप्तत्यधिकपंचशत५७०वर्षे जावड्युद्धार इति ।५॥

*सिरिवज्जसेणसूरी, १४, चाउद्दसमो चंदसूरि पंचदसो १५॥*
*सामंतभद्दसूरी, सोलसमो १६ रण्णवासरई १६॥ ६*
*१४ — तत्पट्टे श्रीवज्रसेनः॥ १५ — तत्पट्टे श्रीचंद्रसूरिः॥*
*१६ - तत्पट्टे श्रीसामंतभद्रसूरिः ( वनवासी ) ।* 25

व्याख्या—१४ सिरिवज्जत्ति, श्रीवज्रस्वामिपट्टे चतुर्दशः श्रीवज्रसेनसूरिः॥ स'च' दुर्भिक्षे श्री वज्रस्वामिवचसा सोपारके गत्वा जिनदत्तगृहे ईश्वरीनाम्न्या तद्भार्यया लक्षपाकभोज्ये विषनिक्षेपविधानचिंतनश्रावणे सति प्रातः सुकालो भावीत्युक्त्या (क्त्वा) विषं निवार्य, १ नागेंद्र २ चंद्र ३ निर्वृति ४ विद्याधराख्यान् चतुरः सकुटुंबानिभ्यपुत्रान् प्रव्राजितवान्। तेभ्यश्च स्वस्वनामांकितानि 5 चत्वारि कुलानि संजातानीति ॥ स च श्रीवज्रसेनो नव ६ वर्षाणिगृहे, षोडषाधिकशत११६व्रते त्रीणि ३ वर्षाणियुग० सर्वायुः साष्टाविंशतिशतं १२८ परिपाल्य श्रीवीरात् विंशत्यधिकषट्शत६२०वर्षांते स्वर्गभाक् ॥

अत्र श्रीवज्रस्वामिश्रीवज्रसेनयोरंतरालकाले श्रीमदार्यरक्षितसूरिः श्रीदुर्बलिकापुष्पश्चेति क्रमेण युगप्रधानद्वयं संजातं॥ तत्र श्रीमदार्यरक्षितसूरिः 10 सप्तनवत्यधिकपंचशत ५६७ वर्षांते स्वर्गभागिति पट्टावलयादौ दृश्यते। परमावश्यकवृत्यादौ श्रीमदार्यरक्षितसूरीणां स्वर्गगमनानंतरं चतुरशीत्यधिकपंचशत५८४वर्षान्ते सप्तमनिह्नवोत्पत्तिरुक्तास्ति । तेनैतद्बहुश्रुतगम्यमिति ॥ नवाऽधिक षट्शत ६०६ वर्षान्ते दिगंबरोत्पत्तिः ॥

15

१५—चंदसूरित्ति, श्रीवज्रसेनपट्टे पंचदशः श्रीचंद्रसूरिः ॥ तस्माचन्द्रगच्छ इति तृतीयं नाम प्रादुर्भूतं । तस्माच्च क्रमेणाऽनेकगणहेतवोऽनेके सूरयो बभूवांसः ॥

१६—सामन्तभद्दत्ति, श्रीचंद्रसूरिपट्टे षोडशः श्रीसामंतभद्रसूरिः ॥ स च पूर्वगतश्रुतविशारदो वैराग्यनिधिर्निर्ममतया देवकुलवनादिष्वऽप्यऽवस्थानात् लोके वनवासीत्युक्तस्तस्माच्चतुर्थं नाम वनवासीति प्रादुर्भूतं ॥ छ ॥६॥ 20

*सत्तरस वुड्ढदेवो १७, सूरी पज्जोअणो अट्ठारसमो १८ ॥*
*एगुणवीसइ इमो सूरी सिरिमाणदेवगुरू १९ ॥७॥*

*१७—तत्पट्टे श्रीवृद्धदेवसूरिः ॥ १८—तत्पट्टे श्रीप्रद्योतनसूरिः ।*
*१९—तत्पट्टे श्रीमानदेवसूरिः ॥*

व्याख्या—१७ सत्तरत्ति, श्रीसामंतभद्रसूरिपट्टे सप्तदशःश्रीवृद्धदेवसूरिः। वृद्धो देवसूरिरिति ख्यातः। श्री वीरात् पंचनवत्यधिकपंचशत५९५वर्षातिक्रमे कोरंटके नाहडमंत्रिनिर्मापितप्रासादे प्रतिष्ठाकृत् ॥

श्रीजज्जगसूरिणा च सप्तत्यधिकषट्शतवर्षे ६७० सत्यपुरे नाहडनिर्मितप्रसादे श्रीमहावीरः प्रतिष्ठितः ॥ 5

१८—सुरिपज्जोअणत्ति, श्रीवृध्धदेवसूरिपट्टे ऽष्टादशः श्रीप्रद्योतनसूरिः ॥

१६—एगूणत्ति, श्रीप्रद्योतनसूरिपट्टे एकोनविंशतितमः श्रीमानदेव सूरिः ॥ सूरिपदस्थापनाऽवसरे यत्स्कंधयोरुपरि सरस्वतीलक्ष्म्यौ साक्षाद्विक्ष्य चरित्रादस्यभ्रंशो भावीति विचारणया विषण्णचित्तं गुरुं विज्ञाय येन भक्तकुलभिक्षाः सर्वाश्च विकृतयस्त्यक्ताः ॥ तत्तपसा नड्डुलपुरे १-पद्मा २-जया 10 ३-विजया ४-अपराजिताऽभिधानाभिः देवीभिः पर्युपासमानं दृष्ट्वा कथं नारीभिः परिकरितोऽयं सूरिरिति शंकापरायणः कश्चित् मुग्धस्ताभिरेव शिक्षित इति॥७॥

*सिरिमाणतुंगसूरी २०, वीसइमो एगवीस सिरिवीरो २१ ॥*
*बावीसो जयदेवो २२, देवाणंदो य तेवीसो २३ ॥ ८ ॥* 15
*२०—तत्पट्टे श्रीमानतुंगसूरिः ॥ २१—तत्पट्टे श्रीवीरसूरिः ॥*
*२२—तत्पट्टे श्रीजयदेवसूरिः ॥ २३—तत्पट्टे श्रीदेवानंदसूरिः ॥*

व्याख्या—२० सिरिमाणतुंगत्ति, श्रीमानदेवसूरिपट्टे विंशतितमः श्रीमानतुंगसूरिः ॥ येन भक्तामरस्तवनं कृत्वा बाण–मयूरपंडितविद्याचमत्कृतोऽपि क्षितिपतिः प्रतिबोधितः। भयहरस्तवनकरणेन च नागराजो 20 वशीकृतः। भक्तिभरेत्यादि स्तवनानि च कृतानि ॥ श्रीप्रभावकचरित्रे प्रथमं श्रीमानतुंगचरित्रमुक्तं, पश्चाच्च श्रीदेवसूरिशिष्यश्रीप्रद्योतनसूरिशिष्यश्रीमानदेवसूरिप्रबंधा उक्ताः। परं तत्र नाऽऽशंका यतस्तत्राऽन्येपि प्रबंधा व्यस्ततयोक्ता दृश्यंते ॥

२१—एगवीसत्ति, श्रीमानतुंगसूरिपट्टे एकविंशतितमः श्रीवीरसूरिः॥ स च श्रीवीरात् सप्ततिसप्तशत७७०वर्षे, विक्रमतः त्रिशती३००वर्षे नागपुरे श्रीनमिप्रतिष्ठाकृत्। यदुक्तम्—

नागपुरे नमिभवन—प्रतिष्टया महितपाणिसौभाग्यः॥
अभवद्वीराचार्य—स्त्रिभिः शतैः साधिके राज्ञः॥ १॥ 5

२२—बावीसत्ति, श्रीवीरसूरिपट्टे द्वाविंशतितमः श्रीजयदेवसूरिः॥७॥

२३—देवाणंदोत्ति, श्रीजयदेवसूरिपट्टे त्रयोविंशतितमः श्रीदेवानंदसूरिः॥ अत्रांतरे श्रीवीरात् पंचचत्वारिंशदधिकाष्टशत८४५वर्षातिक्रमे वलभीभंगः॥ द्व्यशीत्यधिकाष्टशत८८२वर्षातिक्रमे चैत्यस्थितिः॥ षडशीत्यधिकाष्टशत८८६वर्षातिक्रमे ब्रह्मद्वीपिकाः॥ ८॥ 10

॥ चउवीसो सिरिविक्कम २४, नरसिंहो पंचवीस २५ छव्वीसो॥
सूरीसमुद्द २६ सत्ता—वीसो सिरिमाणदेवगुरू २७॥ ९॥

२४—तत्पट्टे श्रीविक्रमसूरिः॥ २५—तत्पट्टे श्रीनरसिंहसूरिः॥
२६—तत्पट्टे श्रीसमुद्रसूरिः॥ २७—तत्पट्टे श्रीमानदेवसूरिः॥

व्याख्या—२४ चउवीसोत्ति, श्रीदेवानंदसूरिपट्टे चतुर्विंशतितमः 15 श्रीविक्रमसूरिः॥

२५—नरसिंहोत्ति, श्रीविक्रमसूरिपट्टे पंचविंशतितमः श्रीनरसिंहसूरिः॥ यतः—नरसिंहसूरिरासीदतोखिलग्रंथपारगो येन॥

यक्षो नरसिंहपुरे, मांसरतिं त्याजितः स्वगिरा॥ १॥

२६—छव्वीसोत्ति, श्रीनरसिंहसूरिपट्टे षड्विंशतितमः श्रीसमुद्र- 20 सूरिः॥

खोमाणराजकुलजोपि समुद्रसूरि—र्गच्छं शशास किल यः प्रवणप्रमाणी॥
जित्वा तदा क्षपणकान् स्ववशं वितेने, नागह्रदे भुजगनाथनमस्यतीर्थं॥१॥

२७—सत्तावीसोत्ति, श्रीसमुद्रसूरिपट्टे सप्तविंशतितमः श्रीमानदेवसूरिः ॥ विद्यासमुद्रहरिभद्रमुनीद्रमित्रं, सूरिर्बभूव पुनरेवहि मानदेवः ॥
मांद्यात्प्रपातमपि योऽनघसूरिमंत्रं, लेभेऽम्बिकामुखगिरा तपसोज्जयंते ॥ १ ॥

श्रीवीरात् वर्षसहस्रे१००० गते सत्यमित्रे पूर्वव्यवच्छेदः ॥ 5

अत्र च श्री १ नागहस्ती २ रेवतीमित्र ३ ब्रह्मद्वीपो ४ नागार्जुनो ५ भूतदिन्नः ६ श्रीकालकसूरिश्चेति षट् युगप्रधाना यथाक्रमं श्रीवज्रसेनसत्यमित्रयोरंतरालकालवर्तिनो बोध्याः ॥ एषु च युगप्रधनशक्राभिवंदितप्रथमानुयोगसूत्रणासूत्रधारकल्पश्रीकालिकाचार्यैः श्रीवीरात् त्रिनवत्यधिकनवशत९९३ वर्षातिक्रमे पंचमीतश्चतुर्थ्यां पर्युषणापर्वाऽऽनीतमिति॥ श्रीवीरात् पंचपंचा-10 शदधिकसहस्र१०५५वर्षे, वि० पंचाशीत्यधिकपंचशत५८५वर्षे याकिनीसूनुः श्रीहरिभद्रसूरिः स्वर्गभाक् ॥ पंचदशाधिकैकादशशत१११५वर्षे श्रीजिनभद्रगणिर्युगप्रधानः ॥ अयं च जिनभद्रियध्यानशतकादेर्हरिभद्रसूरिभिर्वृत्तिकरणाद्भिन्न इति पट्टावल्यां । परं तस्य चतुरुत्तरशतवर्षायुष्कत्वेन श्रीहरिभद्रसूरिकालेपि संभवान्नाऽऽशंकावकाश इति ॥ 15

*॥ अट्ठावीसो विबुहो २८, एगुणतीसे गुरू जयाणंदो २९॥*
*तीसे रविप्पहो ३० इग-तीसो जसदेव सूरिवरो ३१ ॥ १०॥*

*२८—तत्पट्टे श्रीविबुधप्रभसूरिः ॥ २९—तत्पट्टे श्रीजयानंदसूरिः ॥*
*३०—तत्पट्टे श्री रविप्रभसूरिः ॥ ३१—तत्पट्टे श्रीयशोदेवसूरिः ॥*

व्याख्या -२८ अट्ठावीसोत्ति, श्रीमानदेवसूरिपट्टेऽष्टाविंशति- २८. 20 तमः श्रीविबुधप्रभसूरिः ॥

२९—एगुणतीसोत्ति, श्रीविबुधप्रभसूरिपट्टे एकोनत्रिंशत्तमः जयानंद सूरिः ॥

३०—तीसोरवित्ति, श्रीजयानंदसूरिपट्टे त्रिंशत्तमः श्रीरविप्रभसूरिः ॥
स च श्रीवीरात् सप्तत्यधिकैकादशशत११७०वर्षे, वि० सप्तशत७००वर्षे 25

नडुलपुरे श्रीनेमिनाथप्रासादप्रतिष्ठाकृत् । श्रीवी० नवत्यधिकैकादशशत ११६० वर्षे श्रीउमास्वातिर्युगप्रधानः ॥

३१—इगतीसोत्ति, श्रीरविप्रभसूरिपट्टे एकत्रिंशत्तमःश्रीयशोदेवसूरिः॥ अत्र च श्रीवीरात् द्विसप्तत्यधिकद्वादशशत१२७२वर्षे, वि० द्व्युत्तराष्टशत-वर्षे ८०२ अणहिल्लपुरपत्तनस्थापना वनराजेन कृता ॥ श्रीवीर० सप्तत्यधिक 5 द्वादशशत१२७०वर्षे, वि० अष्टशत८००वर्षे भाद्रशुक्लतृतीयायां बप्पभट्टे-र्जन्म, येनामराजा प्रतिबोधितः । स च श्रीवी० पंचषष्ठ्यधिकत्रयोदशशत-१३६५वर्षे वि० पंचनवत्यधिकाष्टशत८९५वर्षे भाद्रशुक्लषष्ठयां स्वर्गभाक् ॥१०॥

*॥ बत्तीसो पजुण्णो ३२, तेतीसो माणदेव जुगपवरो ३३ ॥* 10

*चउतीस विमलचंदो ३४, पणतीसुज्जोअणो सूरी ३५ ॥११॥*

*३२—तत्पट्टे श्रीप्रद्युम्नसूरिः ३३—तत्पट्टे श्रीमानदेवसूरिः ॥*

*३४—तत्पट्टे श्रीविमलचन्द्रसूरिः३५—तत्पट्टेश्री उद्योतनसूरिः ॥*

व्याख्या—३२ बत्तीसोत्ति, श्रीयशोदेवसूरिपट्टे द्वात्रिंशत्तमः श्रीप्रद्युम्न सूरिः ॥ 15

३३—तेत्तीसोत्ति, श्रीप्रद्युम्नसूरिपट्टे त्रयस्त्रिंशत्तमः श्रीमानदेवसूरिः॥ उपधानवाच्यग्रंथविधाता ।

३४—चउतीसत्ति, श्रीमानदेवसूरिपट्टे चतुस्त्रिंशत्तमः श्रीविमलचंद्र-सूरिः ॥ ×

---

× मथुरातः समागतैः श्रीविमलचन्द्रगणिभिः श्रीवीरसूरिः दीक्षितः अंग-विद्यया भूषितश्च पश्चात्तैः विमलगिरौ अनशनं प्रपेदे ॥ वीरसूरिस्वर्गमनं तु विक्रम-स्य ९९१ वर्षे । इतिप्रभावकचरित्रे वीरसूरिप्रबंधे ।

ततः प्रसिद्धोऽजनि चित्रकूटे, सहेमसिद्धिर्विमलेन्दुसूरिः ।
अपूजयद्यं विषमेपि वादे, सयोजिते गोपगिरेर्नरेन्द्रः ॥४४॥

इति गुर्वावल्याम्, क्रियारत्नसमुच्चयप्रशस्त्यां च ।

३५—पणतीसोत्ति, श्रीविमलचंद्रसूरिपट्टे पंचत्रिंशत्तमः श्रीउद्योतन सूरिः ॥ स चाऽर्बुदाचलयात्रार्थं पूर्वावनितःसमागतः । टेलिग्रामस्य सीम्नि पृथोर्वटस्यच्छायायामुपविष्टो निजपट्टोदयहेतुं भव्यमुहूर्तमवगम्य श्रीवीरात् चतुष्षष्ठ्यधिकचतुर्दशत१४६४वर्षे, वि० चतुर्नवत्यधिकनवशत९९४ वर्षे निजपट्टे श्रीसर्वदेवसूरिप्रभृतानष्टौ सूरीन् स्थापितवान् । केचित्तु सर्वदेवसूरिमेकमेवेति 5 वदंति ॥ वटस्याऽधः सूरिपदकरणात् वटगच्छ इति पंचमनाम लोकप्रसिध्धं । प्रधानशिष्यसंतत्या ज्ञानादिगुणैः प्रधानचरितैश्च बृहत्वाद्बृहद्गच्छ इत्यपि ॥११॥

*॥ सिरि सव्वदेवसूरी, छत्तीसो ३६ देवसूरि सगतीसो ३७ ॥*
*अडतीसइमो सूरी पुणोवि सिरिसव्वदेवगुरू ३८॥१२॥* 10
*३६—तत्पट्टे श्रीसर्वदेवसूरिः ३७ तत्पट्टे श्रीदेवसूरिः ॥*
*३८—तत्पट्टे श्रीसर्वदेवसूरिः ॥*

व्याख्या—३६ सिरिसव्वत्ति, श्रीउद्योतनसूरिपट्टे षट्त्रिंशत्तमः श्रीसर्वदेवसूरिः ॥ केचित् श्रीप्रद्युम्नसूरिमुपधानग्रंथप्रणेतृश्रीमानदेवसूरिं च पट्टधरतया न मन्यंते तदभिप्रायेण चतुस्त्रिंशत्तम इति ॥ स च गौतम- 15 वत् सुशिष्यलब्धिमान् । वि० दशाधिकदशशत१०१०वर्षे रामसैन्यपुरे श्री चंद्रप्रभप्रतिष्ठाकृत् । चंद्रावत्यां निर्मापितोत्तुंगप्रासादं कुंकुणमंत्रिणं स्वगिरा प्रतिबोध्य प्राव्राजयत् ॥ यदुक्तं—

चरित्रशुध्धिं विधिवज्जिनागमा—द्विधाय भव्यानभितः प्रबोधयन् ॥
चकार जैनेश्वरशासनोन्नतिं, यः शिष्यलब्ध्याभिनवो नु गौतमः ॥१॥ 20

नृपाद्दशाग्रे शरदां सहस्रे १०१०, यो रामसैन्याह्वपुरे चकार ॥
नाभेयचैत्येऽष्टमतीर्थराज—बिंबप्रतिष्ठां विधिवत् सदर्च्यः ॥२॥

चंद्रावतीभूपतिनेत्रकल्पं, श्रीकुंकुणं मंत्रिणमुच्चऋध्धिं ॥
निर्मापितोत्तुंगविशालचैत्यं, योऽदीक्षयत् शुध्धगिरा प्रबोध्य ॥३॥

तथा वि० एकोनत्रिंशदधिकदशशत१०२६वर्षे धनपालेन देशीनाममाला कृता। वि० षण्णवत्यधिकसहस्र१०६६वर्षे श्रीउत्तराध्ययनटीकाकृत् थिरापद्रगच्छीयवादिवेतालश्रीशांतिसूरिः स्वर्गभाक् ॥

३७—देवसूरित्ति, श्रीसर्वदेवसूरिपट्टे सप्तत्रिंशत्तमः श्रीदेवसूरिः ॥ रूपश्रीरिति भूपप्रदत्तविरुदधारी ॥ 5

३८—अडतीसइमोत्ति, श्रीदेवसूरिपट्टेऽष्टत्रिंशत्तमः पुनः श्रीसर्वदेव सूरिः यो यशोभद्रनेमिचंद्रादीनष्टौ सूरीन् कृतवान् ॥छ॥१२॥

*॥ एगुणचालीसइमो, जसभद्दो नेमिचंदगुरुबंधू ३६ ॥*
*चालीसो मुणिचंदो ४०, एगुआलीसो अजिअदेवो ४१ ॥ १३॥*
*३९—तत्पट्टे श्रीयशोभद्रसूरि-श्रीनेमिचंद्रसूरी ॥* 10
*४०—तत्पट्टे श्रीमुनिचंद्रसूरिः ॥ ४१—तत्पट्टे श्रीअजितदेवसूरिः ॥*

व्याख्या—३६ एगुणत्ति, श्रीसर्वदेवसूरिपट्टे एकोनचत्वारिंशत्तमौ श्रीयशोभद्र-नेमिचंद्रौ द्वौ सूरी गुरुभ्रातरौ ॥ वि० पंचत्रिंशदधिकैकादशशत ११३५वर्षे, केचित् एकोनचत्वारिंशदधिकैकादशशत११३६वर्षे नवांगवृत्ति कृत् श्रीअभयदेवसूरिः स्वर्गभाक् ॥ तथा कूर्चपुरगच्छीयचैत्यवासीजिनेश्वर 15 सूरिशिष्यो जिनवल्लभश्चित्रकूटे पट्कल्याणकप्ररूपणया निजमतं प्ररूपितवान् ॥

४०—चालीसोत्ति, श्रीयशोभद्रसूरि-श्रीनेमिचंद्रसूरिपट्टे चत्वारिंशत्तमः श्रीमुनिचंद्रसूरिः ॥ स भगवान् यावज्जीवमेकसौवीरपायी। प्रत्याख्यात सर्वविकृतिकः। श्रीहरिभद्रसूरिकृताऽनेकांतजयपताकाद्यनेकग्रंथपंजिकोप- 20 देशपदवृत्त्यादिविधानेन तार्किकशिरोमणितया ख्यातिभाक् ॥

यदुक्तम्—सौवीरपायीति तदेकवारि-पानाद्विधिज्ञो विरुदं बभार ॥
जिनागमांभोनिधिधौतबुद्धिर्यः शुध्धचारित्रिपु लब्धरेखः ॥१॥

संविज्ञमौलिर्विकृतीश्चसर्वा- स्तत्याज देहेप्यममः सदा यः ॥
विद्वद्विनेयाभिवृतः प्रभाव—प्रभागुणौघैः किल गौतमाभः ॥ २ ॥
हरिभद्रसूरिरचिताः, श्रीमदनेकांतजयपताकाद्याः ॥
ग्रंथनगा विबुधानामप्यधुना दुर्गमा येऽत्र ॥ ३ ॥
सत्पंजिकादिपद्या—विरचनाया भगवता कृता येन ॥ 5
मंदधियामपि सुगमा—स्ते सर्व्वे विश्वहितबुध्या ॥ ४ ॥
अष्टहयेश११७८मिताव्दे, विक्रमकालाद्दिवं गतो भगवान् ॥
श्रीमुनिचंद्रमुनींद्रो, ददातु भद्राणि संघाय ॥ ५ ॥

अनेन चानंदसूरिप्रभृतयोऽनेके निजवांधवाः प्रव्राज्य सूरीकृताः ॥ अयं च श्रीमुनिचंद्रसूरिः श्रीनेमिचंद्रसूरिगुरुभ्रातृश्रीविनयचंद्रोपाध्यायस्य 10 शिष्यः श्रीनेमिचंद्रसूरिभिरेव गणनायकतया स्थापितः ॥ यदुक्तं—

गुरुबंधुविनयचंद्राध्यापकशिष्यं स नेमिचंद्रगुरुः ॥
यं गणनाथमकार्षीत्, स जयति मुनिचंद्रसूरिरिति ॥ १ ॥

अत्र च एकोनषष्ठ्यधिकैकादशशत११५९वर्षे पौर्णिमीयकमतोत्पत्तिः तत्प्रतिबोधाय च मुनिचंद्रसूरिभिः पाक्षिकसप्ततिका कृतेति ॥ 15

तथा श्रीमुनिचंद्रसूरिशिष्याः श्रीअजितदेवसूरि—वादिश्रीदेवसूरिप्रभृतयः ॥ तत्र वादिश्रीदेवसूरिभिः श्रीमदणहिल्लपुरपत्तने जयसिंहदेवराजस्याऽनेकविद्वज्जनकलितायां सभायां चतुरशीतिवादलब्धजययशसं दिगंबरचक्रवर्तिनं वादलिप्सुं कुमुदचंद्राचार्यं वादे निर्जित्य श्रीपत्तने दिगंबरप्रवेशो निवारितोऽद्यापि प्रतीतः ॥ तथा वि० चतुरधिकद्वादशशत१२०४ 20 वर्षे फलवर्धिग्रामे चैत्यबिंबयोः प्रतिष्ठा कृता । तत्तीर्थं तु संप्रत्यपि प्रसिध्धं॥ तथा आरासणे च श्रीनेमिनाथप्रतिष्ठा कृता ॥ चतुरशीतिसहस्र८४००० प्रमाणः स्याद्वादरत्नाकरनामा प्रमाणग्रंथः कृतः ॥ येभ्यश्च यन्नाम्नैव ख्यातिमत् चतुर्विंशतिसूरिशाखं बभूव ॥ एषां च वि० चतुस्त्रिंशदधिके एकादशशत११३४वर्षे जन्म, द्विपंचाशदधिके११५२ दीक्षा, चतुःसप्त- 25 त्यधिके११७४ सूरिपदं, षड्विंशत्यधिकद्वादशशत१२२६वर्षे श्रावणवदिसप्तम्यां ७ गुरौ स्वर्गः ॥

तत्समये श्रीदेवचंद्रसूरिशिष्यत्रिकोटिग्रंथकर्ता कलिकालसर्वज्ञख्यातिमान् श्रीहेमचंद्रसूरिः तस्य वि० पंचचत्वारिंशदधिके एकादशशत-११४५वर्षे कार्तिकशुदिपूर्णिमायां १५ जन्म, पंचाशदधिके ११५० व्रतं, षड्षष्ठ्यधिके११६६ सूरिपदं, एकोनित्रिंशदधिकद्वादशशत१२२९वर्षे स्वर्गः ॥

४१—एगुआलीसोत्ति, श्रीमुनिचंद्रसूरिपट्टे एकचत्वारिंशत्तमः श्री- 5 अजितदेवसूरिः ॥ तत्समये वि० चतुरधिकद्वादशशत१२०४वर्षे खरतरोत्पत्तिः ॥× तथा वि० त्रयोदशाधिके द्वादशशत१२१३वर्षे आंचलिकमतोत्पत्तिः ॥ वि० षट्त्रिंशदधिके १२३६ सार्धपौर्णिमीयकोत्पत्तिः ॥ वि० पंचाशदधिके१२५० आगमिकमतोत्पत्तिः ॥ श्रीवीरात् द्विनवत्यधिकषोडशा-तं१६९२वर्षे वाहडोध्धारः+॥ छ ॥ १३ ॥ 10

*॥ बायालु विजयसीहो ४२, तेआला हुंति एगगुरुभाया ॥*
*सोमप्पह-मणिरयणा ४३, चउआलीसो अ जगचंदो ॥४४॥ १४ ॥*
*४२-तत्पट्टे श्रीविजयसिंहसूरिः ॥ ४३-तत्पट्टे श्रीसोमप्रभसूरिः श्रीमणिरत्नसूरिश्च ॥ ४४—तत्पट्टे श्रीजगच्चन्द्रसूरिः ॥*

व्याख्या—४२-बायालुत्ति,श्रीअजितदेवसूरिपट्टे द्विचत्वारिंशत्तमः ॥15 श्रीविजयसिंहसूरिः ॥ विवेकमंजरीशुध्धिकृत् ॥

यस्य प्रथमः शिष्यः, शतार्थितया विख्यातः ॥
श्रीसोमप्रभसूरिः, द्वितीयस्तु मणिरत्नसूरिः ॥ १ ॥

४३—तेआलत्ति, श्रीविजयसिंहसूरिपट्टे त्रयश्चत्वारिंशत्तमौ श्री सोमप्रभसूरि—श्रीमणिरत्नसूरी ॥ 20

---

× वि० सं० १२०४वर्षे पत्तने पौषधशालि-वनवासिनोर्विवादे कवलांगच्छः खरतरगच्छश्चेति नामनी अभूतान् ।

इति पूरणचंदजी नहार संग्रहित पट्टावल्यां

( श्रीजैन श्वे० कॉ० हे० पु० १४ अं० ४, ५, ६, पत्र १६२ मुद्रितायां )

+ श्रीवीरात् १६८१ वर्षे इति प्रबंधचिंतामणौ । श्रीवीरात् १६८३ वर्षे इति पं० वीरविजयगणिविरचितायां पूजायां ॥

४४—चउआलीसोत्ति, श्री सोमप्रभ-श्रीमणिरत्नसूरिपट्टे चतुश्चत्वारिंशत्तमः ४४ श्री जगच्चंद्रसूरिः ॥

यः क्रियाशिथिलमुनिसमुदायं ज्ञात्वा गुर्वाज्ञया वैराग्यरसैकसमुद्रं चैत्रगच्छीयश्रीदेवभद्रोपाध्यायं सहायमादाय क्रियायामौग्र्यात् हीरलाजगच्चंद्रसूरिरितिख्यातिभाक् बभूव। केचित्तु आघाटपुरे द्वात्रिंशता दिगंबराचार्यैः 5 सह विवादं कुर्वन् हीरकवदभेद्यो जात इति राज्ञा हीरलाजगच्चंद्रसूरिरिति भणित इत्याहुः ॥ तथा यावज्जीवमाचामाम्लतपोऽभिग्रहीतद्वादशवर्षैस्तपा विरुदमाप्तवान् ॥ ततः पट्टं नाम वि० पंचाशीत्यधिकद्वादशशत१२८५वर्षे तपा इति प्रसिद्धं ॥

तथा च १–निर्ग्रंथ २–कौटिक ३–चंद्र ४–वनवासि ५–वटगच्छे 10 त्यपरनामकबृहद्गच्छ ६–तपा इति षण्णां नाम्नां प्रवृत्तिहेतव आचार्याः क्रमेण १–श्रीसुधर्मस्वामि २–श्रीसुस्थित ३–श्रीचंद्र ४–श्रीसामंतभद्र ५–श्री सर्वदेव ६–श्रीजगच्चंद्रनामानः पट्टसूरयः ॥छ॥१४॥

*॥ देविंदो पणयालो ४५, छायालीसो अ धम्मघोसगुरू ॥ ४६ ॥*
*सोमप्पह सगचत्तो, ४७ अडचत्तो सोमतिलगगुरू ४८॥१५॥* 15
*४५–तत्पट्टे श्रीदेवेन्द्रसूरिः ॥ ४६–तत्पट्टे श्रीधर्मघोषसूरिः*
*४७–तत्पट्टे श्रीसोमप्रभसूरिः ॥ ४८–तत्पट्टे श्रीसोमतिलकसूरिः ॥*

व्याख्या–४५–देविंदोत्ति, श्रीजगच्चंद्रसूरिपट्टे पंचचत्वारिंशत्तमः श्रीदेवेंद्रसूरिः ॥ स च मालवके उज्जयिन्यां जिनभद्रनाम्नो महेभ्यस्य वीरधवलनाम्नस्तत्सुतस्य पाणिग्रहणनिमित्तं महोत्सवे जायमाने वीरधव- 20 लकुमारं प्रतिबोध्य, वि० द्व्युत्तरत्रयोदशशत१३०२वर्षे प्राव्राजयत् ॥ तदनु तद्भ्रातरमपि प्रव्राज्य चिरकालं मालवके एव विहृतवान्। ततो गूर्जरधरित्र्यां श्रीदेवेंद्रसूरयः श्रीस्तंभतीर्थे समायाताः।

तत्र पूर्वं श्री विजयचंद्रसूरयः १-गीतार्थानां पृथक् पृथक् वस्त्रपुट्टलिकादानं, २-नित्यविकृत्यनुज्ञा, ३-चीवरक्षालनानुज्ञा, ४ फलशाकग्रहणं, 25

५-साधुसाध्वीनां निर्विकृतिकप्रत्याख्याने निर्वृकृतिकग्रहण, ६-आयकासमानीताऽशनादिभोगानुज्ञा, ७-प्रत्यहं द्विविधप्रत्याख्यानं, ८-गृहस्थावर्जननिमित्तं प्रतिक्रमणकारणानुज्ञा, ९-संविभागदिने तद्गृहे गीतार्थेन गंतव्यं, १०-लेपसंनिधग्रभावः, ११-तत्कालेनोष्णोदकग्रहणं, इत्यादिना क्रियाशैथिल्यरुचीन् कतिचिन् मुनीन् स्वायत्तीकृत्य सदोपत्वात् श्रीजगच्चंद्रसूरिभिः परित्यक्तायामपि विशालायां पौषधशालायां लोकाग्रहात् द्वादशवर्षाणि स्थितवंतः। प्रव्रज्यादिककृत्यमपि गुर्वाज्ञामंऽतरेणैव कृतवंतश्च ॥ 5

श्रीविजयचंद्रसूरिव्यतिकरस्त्वेवं—

मंत्रिवस्तुपालगृहे विजयचंद्राख्यो लेख्यकर्मकृत् मंत्र्याऽऽसीत् ॥ क्वचनाऽपराधे कारागारे प्रक्षिप्तः। श्रीदेवभद्रोपाध्यायैः प्रव्रज्याग्रहणप्रतिज्ञया विमोच्य प्रव्राजितः। स च सप्रज्ञो बहुश्रुतीभूतो मंत्रिवस्तुपालेन नाऽयं साभिमानी सूरिपदयोग्य इत्येवं वार्यमाणैरपि श्रीजगच्चंद्रसूरिभिः श्रीदेवभद्रोपाध्यायानुराधात् श्रीदेवेंद्रसूरीणां सहायो भविष्यतीति विचिंत्य च सूरीकृतः ॥ बहुकालं च श्रीदेवेंद्रसूरिषु विनयवानेवासीत्। 10 15

मालवदेशात्समागतानां श्रीदेवेंद्रसूरीणां तदा वंदनार्थमपि नाऽऽयातः गुरुभिर्ज्ञापितं कथमेकस्यां वसतौ द्वादशवर्षाणि स्थितमिति श्रुत्वा "निर्ममनिरहंकारा" इत्यादि प्रत्युत्तरं प्रेपितवान् ॥ संविग्नास्तु न तं प्रत्याश्रिताः। श्रीदेवेंद्रसूरियस्तु पूर्वमनेकसंविग्नसाधुपरिकरिता 'उपाश्रय' एव स्थितवंतः ॥ लोकैश्च वृद्धशालायां स्थितत्वात् श्रीविजयचंद्रसमुदायस्य "वृद्धशालिक" इत्युक्तं। तद्वशात् श्रीदेवेंद्रसूरिनिश्रितसमुदायस्य "लघुशालिक" इति ख्यातिः॥ 20

स्तंभतीर्थे च चतुष्पथस्थितकुमारपालविहारे धर्मदेशनायामष्टादशशत १८०१ मुखवस्त्रिकाभिर्मंत्रिवस्तुपालः चतुर्वेदादिनिर्णयदातृत्वेन स्वसमयपरसमयविदां श्रीदेवेंद्रसूरीणां वंदनकदानेन बहुमानं चकार ॥ श्रीगुरवस्तु विजयचंद्रमुपेत्य विहरमाणाः क्रमेण पाल्हणपुरे समायाताः। तत्र चानेकजनतान्विताः शीकरीयुक्तसुखासनगामिनश्चतुरशीतिरिभ्या धर्मश्रोतारः। प्रल्हादनविहारे च प्रत्यहं मूटकप्रमाणा अक्षताः, क्रयविक्रयादौ नियतांशग्रहणात् ॥ षोडशमण 25

प्रमाणानि पूगीफलानि चायांति। प्रत्यहं पंचशतीवीसलप्रियाणां भोगः ॥ एवं व्यतिकरे सति श्रीसंघेन विज्ञप्ता गुरवः यदत्र गणाधिपतिस्थापनेन पूर्यतामस्मन्मनोरथः। गुरुभिस्तु तथाविधमौचित्यं विचार्य प्रल्हादनविहारे वि० त्रयोविंशत्यधिके त्रयोदशशते १३२३ वर्षे,क्वचिच्चतुरधिके१३०४ श्रीविद्यानंदसूरिनाम्ना वीरधवलस्य सूरिपददानं। तदनुजस्य च भीमसिंहस्य धर्मकीर्ति- 5 नाम्नोपाध्यायपदमपि तदानीमेव संभाव्यते॥ सूरिपददानावसरे सौवर्णकपिशीर्षके प्रल्हादनविहारे मंडपात् कुंकुमवृष्टिः ॥ सर्वोपि जनो महाविस्मयं प्राप्तः। श्राद्धैश्च महानुत्सवश्चक्रे ॥ तैश्च श्रीविद्यानंदसूरिभिर्विद्यानंदाभिधं व्याकरणं कृतं ॥ यदुक्तम्—

विद्यानंदाभिधं येन कृतं व्याकरणं नवम् ॥ 10
भाति सर्वोत्तमं स्वल्प–सूत्रं बह्वर्थसंग्रहं ॥१॥

पश्चात् श्रीविद्यानंदसूरीन् धरित्र्यामाऽऽज्ञाप्य, पुनरपि श्रीगुरवो मालवके विहृतवंतः। तत्कृताश्च ग्रंथास्त्वेते—

२—श्राद्धदिनकृत्यसूत्र–वृत्ती, २—नव्यकर्मग्रंथपंचकसूत्र–वृत्ती, २–सिध्धपंचाशिकासूत्र–वृत्ती, १–धर्मरत्नवृत्तिः, २–( १ ) सुदर्शनचरित्रं, 15 ३–त्रीणि भाष्यानि, " सिरिउसहवध्धमाण " प्रभृतिस्तवादयश्च। केचित्तु श्रावकदिनकृत्यसूत्रमित्याहुः॥ विक्रमात् सप्तविंशत्यधिकत्रयोदशशत १३२७-वर्षे मालवक एव देवेंद्रसूरयः स्वर्गं जग्मुः ॥

दैवयोगात् विद्यापुरे श्रीविद्यानंदसूरयोऽपि त्रयोदशदिनांतरिताः स्वर्गभाजः। अतः षड्भिर्मासैः सगोत्रिसूरिणा श्रीविद्यानंदसूरिवांधवानां 20 श्रीधर्मकीर्त्युपाध्यायानां श्रीधर्मघोषसूरिरितिनाम्ना सूरिपदं दत्तं ॥

श्रीगुरुभ्यो विजयचंद्रसूरिपृथग्भवने कं गुरुं सेवेऽहमिति संशयानस्य सौवर्णिकसंग्रामपूर्वजस्य निशि स्वप्ने देवतया श्रीदेवेंद्रसूरीणामन्वयो भव्यो भविष्यतीति तमेव सेवस्वेति ज्ञापितं ॥

श्रीगुरूणां स्वर्गगमनं श्रुत्वा संघाधिपतिना भीमेन द्वादशवर्षाणि 25 धान्यं त्यक्तं ॥छ॥

४६–छायालीसोत्ति, श्रीदेवेंद्रसूरिपट्टे षट्चत्वारिंशत्तमः श्रीधर्मघोषसूरिः येन मंडपाचले सा० पृथ्वीधरः पंचमव्रते लक्षप्रमाणं परिग्रहं नियमयन् ॥ ज्ञानातिशयात्तद्भंगमवगम्य प्रतिषेधितः । स च मंडपाचलाधिपस्य सर्वलोकाभिमतं प्राधान्यं प्राप्तः, ततो धनेन धनदोपमो जातः ॥ पश्चात्तेन चतुरशीति-८४जिन प्रासादाः सप्त च ज्ञानकोशाः कारिताः । श्रीशत्रुंजये च एकविंश- 5 तिघटीप्रमाणसुवर्णव्ययेन रैमयः श्रीऋषभदेवप्रासादः कारितः ॥ केचिच्च तत्र षट्पंचाशत्सुवर्णघटीव्ययेनेंद्रमालायां ( लां यो ) परिहितवानिति वदंति ॥

तथा धरित्र्यां केनचित्साधर्मिकेण ब्रह्मचारिवेषदानावसरे महर्धिकत्वात् पृथ्वीधरस्यापि तद्वेषः प्राभृतीकृतः स च तमेव वेषमादाय ततःप्रभृति द्वात्रिंशद्वर्षीयोऽपि ३२ ब्रह्मचार्यभूत् ॥ 10

तस्य च पुत्र सा० झांझणनाम्ना एक एवासीत् । येन श्रीशत्रुंजयोज्जयंतगिर्योः शिखरे द्वादश१२योजनप्रमाणः सुवर्णरूप्यमय एक एव ध्वजः समरोपितः ॥ कर्पूरक्तेराजासारंगदेवः, करयोजनं कारितः ॥

येन च मंडपाऽचले जीर्णटंकानां द्विसप्तत्या क्वचित् षट्त्रिंशता सहस्रैर्गुरूणां प्रवेशोत्सवश्चक्रे ॥ 15

देवपत्तने च शिष्याभ्यर्थनया मंत्रमयस्तुतिविधानतो येषां रत्नाकरस्तरंगै रत्नढौकनं चकार । तथा तत्रैव ये स्वध्यानप्रभावात्प्रत्यक्षीभूतंनवीनोत्पन्न कपर्दियक्षेण वज्रस्वामिमहात्म्याच्छत्रुंजयान्निष्काशितं जीर्णकपर्दिराजं मिथ्यात्वमुत्सर्प्यंयंतं प्रतिबोध्य श्रीजैनविद्याधिष्ठायकं व्यधुरिति ॥ एकदा काभिश्चिद् दुष्टस्त्रीभिः साधुनां विहारिता कार्मणोपेता वटका भूपीठे यैस्त्याजिताः 20 संतः प्रभाते पाषाणा अभवन् । तदनु चाभिमंत्र्याऽर्पितपट्टकासनास्ताः स्तंभिताः सत्यः कृपया मुक्ता इति ॥ तथा विद्यापुरे पक्षांतरीय तथाविधस्त्रीभिर्गुरूणां व्याख्यानरसे मात्सर्यात् स्वरभंगाय कण्ठे केशगुच्छके कृते यैर्विज्ञातस्वरूपास्ताः प्राग्वत्स्तंभिताः संत्योऽतःपरं भवद्गणे न वयमुपद्रोष्याम इति वाग्दानपुरःसरं संघाग्रहान्मुक्ता इति ॥ 25

उज्जयिन्यां च योगिभयात् साध्वस्थिते गुरव आगताः योगिना साधवः प्रोक्ताः अगागतैः स्थिरैः स्थेयं ? साधुभिरुक्तं स्थिताःस्मः किं करिष्यसि ? तेन साधूनां दन्ता दर्शिताः, साधुभिस्तु कफोणिर्दर्शिता। साधुभिर्गत्वा गुरूणां विज्ञप्तं ॥ तेन शालायामुन्दरवृन्दं विकुर्वितं। साधवो भीताः गुरुभिर्घटमुखं वर ेणाऽऽच्छाद्य तथा जप्तं यथा राटिं कुर्वन् स योगी आगत्य पादयोर्लग्नः॥ 5

क्वचनपुरे निश्यभिमंत्रितद्वारदानं, एकदा अनभिमंत्रितद्वारदाने शाकिनीभिः पट्टिरुत्पाटितास्तंभितास्ता वाग्दाने च मुक्ताः॥

यैरेकदा सर्पदंशे रात्रौ विषेणांतरांतरामूर्छामुपगतैरुपायविधुरं संघं प्रत्यूचे। प्राचीनप्रतोल्यां कस्यचित्पुंसो मस्तके काष्टभारिकामध्ये विषापहारिणी लता समेष्यति,सा च घृष्य दंशे देया इत्येवं प्रोक्ते संघेन च तथा विहिते 10 तया प्रगुणीभूय ततःप्रभृति यावज्जीवं षडपि विकृतयस्त्यक्ता आहारस्तु तेषां सदा युगंधर्या एव॥

तत्कृता ग्रंथास्त्वेवं- संघाचारभाष्यवृत्तिः, सुअधम्मेतिस्तवः, कायस्थित-भवस्थितिस्तवौ, चतुर्विंशतिजिनस्तवाः, चतुर्विंशतिः, प्रस्ताशर्मेत्यादिस्तोत्रं, देवेंद्रैरनिशं० इति श्लेषस्तोत्रं, यूयं यूवां त्वमिति श्लेषस्तुतयः, 15 जय वृषभेत्यादिस्तुत्याद्याः॥

तत्र जय वृषभेत्यादिस्तुतिकरणव्यतिकरस्त्वेवं-एकेन मंत्रिणाऽष्टयमकं काव्यमुक्त्वा प्रोचे, ईदृगूकाव्यमधुना केनाऽपि कर्तुं न शक्यं। गुरुभिरुचेऽनस्तिर्नास्ति। तेनोक्तं तं कविं दर्शयत। तैरुक्तं ज्ञास्यते॥ ततो जयवृषभस्तुतयो अष्टयमका एकया निशा निष्पाद्य भित्तिलिखितादर्शिताः। स-च चमत्कृतः 20 प्रतिबोधितश्च॥ ते च वि० सप्तपंचाशदधिकत्रयोदशशत१३५७वर्षे दिवंगताः॥

४७—सोमप्पहत्ति, श्रीधर्मघोपसूरिपट्टे सप्तचत्वारिंशत्तमः श्रीसोमप्रभसूरिः॥ नमिऊण भणइ एवमित्याद्याराधनासूत्रकृत्। तस्य च वि० दशाधिकत्रयोदशशत१३१०वर्षे जन्म, एकविंशत्यधिके१३२१व्रतं, द्वात्रिंशदधिके१३३२ सूरिपदं,कण्ठगतैकादशांगसूत्रार्थो गुरुभिर्दीयमानायां मंत्रपुस्तिकायां यच्छत 25

चारित्रं मंत्रपुस्तिकां वेत्युक्त्वा न मंत्रपुस्तिकां गृहीतवान्। अपरस्य योग्य-
स्याऽभावात् सा जलसात्कृता ॥

येन श्री सोमप्रभसूरिणा जलकुंकुणदेशे ऽप्कायविराधनाभयात् मरौ
शुद्धजलदौर्लभ्यात् साधूनां विहारः प्रतिषिध्धः ॥
5
तथा भीमपल्यां कार्तिके द्वये प्रथम एव कार्तिके एकादशाऽन्यपक्षीया-
ऽऽचार्याऽविज्ञातं भाविनं भंगं विज्ञाय चतुर्मासीं प्रतिक्रम्य विहृतवंतः पश्चा-
त्तद्भंगोऽभवत्। तेचाऽऽचार्या अकृतगुरुवचना भंगमध्येऽपतन्निति ॥

तत्कृता ग्रंथास्तु सविस्तरयतिजीतकल्पसूत्रं, यत्राखिलेत्यादि २८
स्तुतयः, जिनेन येनेतिस्तुतयः, श्रीमद्धर्मेत्यादयश्च ॥
10
तच्छिष्याः, श्रीविमिलप्रभसूरि १ श्रीपरमानंदसूरि २ श्रीपद्मतिलक-
सूरि ३ श्रीसोमतिलकसूरय ४ इति ॥

यस्मिन् वर्षे श्रीधर्मघोषसूरयो दिवंगताः तस्मिन्नेव वर्षे १३५७ श्री-
सोमप्रभसूरिभिः श्रीविमलप्रभसूरीणां पदं ददे। ते च स्तोकं जीविता ॥ तत
स्वायुर्ज्ञात्वा त्रिसप्तत्यधिकत्रयोदशशत१३७३वर्षे श्रीपरमानंदसूरि-श्रीसोम-
तिलकसूरीणां सूरिपदंदत्वा,मासत्रयेण वि० त्रिसप्तत्यधिकत्रयोदशशत१३७३ 15
वर्षे श्रीसोमप्रभसूरयो × दिवं गताः ॥ तदानीं च स्तंभतीर्थे तेषामाऽऽलिग-
वसतिस्थत्वेन तत्रत्याः प्रत्यासन्ना लोका आकाशोद्योताद्यालोक्योक्तवंतो
यदेतेषां गुरूणां स्वर्गाद्विमानमागादिति ॥ अन्यत्र च कापिपुरे तद्दिने यात्राव-
तीर्णदेवतयेत्युक्तं " यत्तपाचार्या सौधर्मेन्द्रसामानिकत्वेन समुत्पन्ना " इति-
प्रवादोऽधुना मया मेरौ देवमुखात् श्रुत इति ॥ 20

श्रीपरमानन्दसूरिरपि वर्षचतुष्टयं जीवितः ॥छ॥

४८—अडचत्तोत्ति, श्रीसोमप्रभसूरिपट्टेऽष्टचत्वारिंशत्तमः श्रीसोम
तिलकसूरिः। तस्य वि० पंचपंचाशदधिके त्रयोदशशत१३५५वर्षे माघे जन्म,
एकोनसप्तत्यधिके १३६९ दीक्षा, त्रिसप्तत्यधिके १३७३ सूरिपदं, चतुर्विंशत्य-

धिकचतुर्दशशते १४२४ वर्षे स्वर्गः, सर्वायुरेकोनसप्तति ६९ वर्षाणां ॥×

तत्कृता ग्रंथाः—बृहन्नव्यक्षेत्रसमाससूत्रं, सत्तरिसयठाणं, यत्राखिल० जयवृषभ० स्वस्ताशर्म० प्रमुखस्तववृत्तयः श्रीतीर्थराजः० चतुरर्थास्तुतिस्तद्वृत्तिः, शुभभावानव० श्रीमद्वीरस्तुवे इत्यादि कमलबन्धस्तवः शिवशिरसि० श्रीनाभिसंभव० श्रीशैवेय० इत्यादीनि बहूनि स्तवनानि च ॥ 5

श्रीसोमतिलकसूरिभिस्तु क्रमेण श्रीपद्मतिलकसूरि १ श्रीचंद्रशेखररसूरि २ श्रीजयानन्दसूरि ३ श्रीदेवसुन्दरसूरीणां ४ सूरिपदं दत्तं ॥

तेषु श्रीपद्मतिलकसूरयः श्रीसोमतिलकसूरिभ्यः पर्यायज्येष्ठा एकंवर्षजीविताः परं समित्यादिषु परमयतनापरायणाः ॥

श्रीचंद्रशेखरसूरेः वि० त्रिसप्तत्यधिकेत्रयोदशशत१३७३वर्षेजन्म, 10 पंचाशीत्यधिके१३८५ व्रतं, त्रिनवत्यधिके १३९३ सूरिपदं, त्रयोविंशत्यधिकचतुर्दशशत१४२३वर्षे स्वर्गः ॥ तत्कृतानि—उषितभोजनकथा, यवराजर्षिकथा, श्रीमद्स्तंभनकहारबंधस्तवनानि ॥ यदभिमंत्रितरजसाप्युपद्रवं कुर्वाणा गृहहरिका दुर्द्धरमृगराजश्च नेशुरिति ॥

श्रीजयानंदसूरेः वि०अशीत्यधिके त्रयोदशशत१३८०वर्षे जन्म, द्वि- 15 नवत्यधिके१३९२ आषाढ़शु०सप्तमी७शुक्रे धरायां व्रतं, साजणाख्यो वृद्धभ्राता प्रव्रज्याऽऽदेशदानाऽनभिमुखो देवतया प्रतिबोधितो दीक्षादेशमनुमेने, विंशत्यधिके चतुर्दशशत१४२०वर्षे चै०शु०दशम्यां१० अणहिल्लपत्तने सूरिपदं, एकचत्वारिंशदधिके १४४१ स्वर्गः ॥ तत्कृतग्रंथाः—श्रीस्थूलभद्रचरित्रं, देवाःप्रभोयं०प्रभृतिस्तवनानि ॥ १५ ॥ 20

*॥ एगुणवण्णो सिरिदेव-सुंदरो ४९ सोमसुंदरो पण्णो ५० ॥*
*मुनिसुंदरेगवण्णो ५१, बावण्णो रयणसेहरओ ५२ ॥ १६ ॥*

---

× श्रीजिनेश्वरसूरिशिष्यो जिनप्रभसूरिः। येन प्रतिदिनं नव्यस्तोत्रादिकरणानंतरमेवाऽऽहारग्रहणाभिग्रहेण नैकानि स्तोत्राणि विरचितानि प्रभावतीदेवीवचनात् तपागच्छमभ्युदयवन्तं समीक्ष्य श्रीसोमतिलकसूरये ७००स्तोत्राणि समर्पितानि ॥ इति श्रीजिनप्रभसूरिकृतसिद्धांतस्तवस्य तच्छिष्यादिगुप्तकृतायामवचूर्यां। (जैनरौप्यांके)।

*४६—तत्पट्टे श्रीदेवसुंदरसूरिः* ॥ *५०—तत्पट्टे श्रीसोमसुंदरसूरिः* ॥
*५१—तत्पट्टे श्रीमुनिसुंदरसूरिः* ॥ *५२—तत्पट्टे श्रीरत्नशेखरसूरिः* ॥

व्याख्या—४६ एगुणवएणेत्ति, श्रीसोमतिलकसूरिपट्टे एकोनपंचाशत्तमः श्रीदेवसुंदरसूरिः ॥ तस्य वि०पएणवत्यधिके त्रयोदशशत१३६६-वर्षे जन्म, चतुर्वर्षाधिके चतुर्दशशत१४०४वर्षे व्रतं महेश्वरग्रामे, विंशत्य- 5
धिके १४२० अणहिल्लपत्तने सूरिपदं ॥ यं पत्तने गुंगडीसरःकृतस्थितिः प्रधानतरयोगिशतत्रयपरिवृतो मंत्रतंत्रादिसमृद्धिमंदिरं स्थावरजंगमविपापहारी जलानलव्यालहरिभयभेत्ता अतीतानागतादिवस्तुवेत्ता राजमंत्रिप्रमुखबहुजनबहुमानपूजितः उदयीपा योगी प्रजासमक्षं स्तुतिं कुर्वाणः प्रकटितपरमभक्तिडंबरः साडंबरं वंदितवान् ॥ तदनु च संघाधिपनरिआद्यैर्वंदनकारणं पृष्टः 10
स योगी उवाच—"पद्माऽऽत्तदंडपरिकरचिह्नैरुपलक्ष्ययुगोत्तमगुरवस्त्वया-वंदनीया" इतिदिव्यज्ञानशक्तिमतः कणयरीपाऽभिधानस्वगुरोर्वचसा वंदित इति ॥

श्रीदेवसुन्दरसूरीणां च श्रीज्ञानसागरसूरयः, श्रीकुलमंडनसूरयः, श्रीगुणरत्नसूरयः, श्रीसोमसुंदरसूरयः, श्रीसाधुरत्नसूरयश्चेति पंचशिष्या- 15
स्तत्र श्रीज्ञानसागरसूरीणां वि०पंचाधिके चतुर्दशशत१४०५वर्षेजन्म, सप्तदशाधिके१४१७दीक्षा, एकचत्वारिंशदधिके १४४१ सूरिपदं, षष्ठ्यधिके १४६० स्वर्गः ॥ स च चतुर्थः ॥ तदुक्तं गुर्वावल्यां ( श्लो० ३३८, ३३६ )

> खरतरपक्षश्राद्धो, मन्त्रिवरो गोवलः सकलरात्रिम् ॥
> अनशनसिद्धौ भक्त्या, ऽगुरुकर्पूरादिभोगकरः ॥१॥ 20
> ईषन्निद्रामाप्या—ऽपश्यत्स्वप्ने सुदिव्यरूपधरान् ॥
> तानिति वदतस्तुर्ये, कल्पेस्मः शक्रसमविभवाः ॥२॥ युग्ममिति ॥

तत्कृताग्रंथाश्च—श्रीआवश्यौघनिर्युक्त्याद्यनेकग्रंथावचूर्णयः, श्रीमुनिसुव्रतस्तव—घनौघनवखण्डपार्श्वनाथस्तवादि च ॥

श्रीकुलमण्डनसूरीणां च वि० नवाधिके चतुर्दशशते १४०६ जन्म, 25
सप्तदशाधिके १४१७ व्रतं, द्विचत्वारिंशदधिके १४४२ सूरिपदं, पंचपंचाश-

दधिके १४५५ स्वर्गः ॥ सिध्धांतालापकोद्धारः, विश्वश्रीधरेत्यादिअष्टादशार-चक्रबंधस्तव—गरीयो०हारबंधस्तवादयश्च तत्कृतग्रन्थाः ॥

श्रीगुणरत्नसूरीणां चासाधारणो नियमः ॥ तदुक्तम् (गु०श्लो० ३८१)

जगदुत्तरो हि तेषां, नियमोऽवष्टंभरोपविकथानां
आसन्नां मुक्तिरमां, वदति चरित्रादिनैर्मल्यात् ॥१॥ इति 5

तत्कृताश्च ग्रंथाः—क्रियारत्नसमुच्चयः षडदर्शनसमुच्चयबृहद्वृत्त्यादयः ॥ श्रीसाधुरत्नसूरीणां कृतिर्यतिजीतकल्पवृत्त्यादिकेति ॥छ॥

५०—पण्णोत्ति श्रीदेवसुन्दरसूरिपट्टे पंचाशत्तमः श्रीसोमसुन्दरसूरिः ॥

तस्य वि० त्रिंशदधिके चतुर्दशशत१४३०वर्षे मा० व० चतुर्दश्यां १४ शुक्रे जन्म, सप्तत्रिंशदधिके १४३७ व्रतं, पंचाशदधिके १४५० वाचकपदं 10 सप्तपंचाशधिके १४५७ सूरिपदं ॥ यमष्टादशशत१८००साधुपरिकरितं सत्क्रियापरायणं महामहिमालयं गुरुं दृष्ट्वा रुष्टैर्द्रव्यलिंगिभिरेकः पंचशतद्र-विणदानेन सशस्त्रः पुमांस्तद्वधायोदीरितः। स च दुर्धिया वसतौ प्रविष्टो यावदनुचितकरणाय यतते तावच्चन्द्रोद्योते जाते सति निद्रालुभिरपि श्रीगुरुभी रजोहरणेन प्रमृज्य पार्श्वं परावर्तितं,तद्दृष्ट्वाऽहो निद्रायामपि क्षुद्रप्राणिकृपा- 15 परमेनमपराध्य "कस्यां गतौ मे गति" रिति विचारणया परलोकभीतो गुरुपा-दयोर्निपत्य "क्षमध्वं मेऽपराध" मिति वचसा गुरुं प्रबोध्य निजव्यतिकरं क-थितवान् । सोपि गुरुभिर्मधुरवाचा तथोदीरितो यथा प्रव्रजित इति वृद्धवचः ॥

तथा यस्य ज्ञानवैराग्यनिधेर्गुणगणप्रतीतिः परपक्षेऽपि प्रतीता । तदुक्तं गुरुगुणरत्नाकरे ( सर्ग १ श्लोक ६२ )-- 20

आकर्ण्य यद्गुणगणं गृहिणः प्रहृष्टा, लेखेन दुष्कृततती रतिदूरदेशात् ॥
विज्ञप्य केपि कृतिनः परपक्षभाजोऽप्यालोचनां जगृहुरास्यकजेन येषां ॥१॥

इति ॥ तत्कृतिश्च—योगशास्त्रोपदेशमालापडावश्यकनवतत्वादि-बालावबोधभाष्यावचूर्णिकल्याणकस्तोत्रादिनीति ।

तच्छिष्यास्तु—श्रीमुनिसुन्दरसूरिः१, कृष्णसरस्वतीबिरुदधारकश्री- 25 जयसुन्दरसूरिः २, महाविद्याविडंबनटिप्पनकारकश्रीभुवनसुन्दरसूरिः ३,

कंठगतैकादशांगीसूत्रधारकदीपावलिकाकल्पादिकारकश्रीजिनसुन्दरसूरिश्चेति चत्वारः ॥ तैःपरिकरितो राणपुरे श्रीधरणचतुर्मुखविहारे ऋषभाद्यनेकशतबिंबप्रतिष्ठाकृत् ॥ अनेकभव्यप्रतिबोधादिना प्रवचनमुद्भाव्य वि० नवनवत्यधिकचतुर्दशशत१४९९वर्षे स्वर्गभाक् ॥

५१—मुनिसुंदरेगवणोत्ति, श्रीसोमसुंदरसूरिपट्टे एकपंचाशत्तमः 5 श्रीमुनिसुन्दरसूरिः ॥ येनानेकप्रासादपद्मचक्रपट्कारकक्रियागुप्तकाऽर्धभ्रमसर्वतोभद्रमुरजसिंहासनाऽशोकभेरीसमवसरणसरोवराऽष्टमहाप्रातिहार्यादिनव्यत्रिशतीबंधतर्कप्रयोगाद्यनेकचित्राक्षरद्वयक्षरपंचवर्गपरिहाराद्यनेकस्तवमय "त्रिदशतरंगिणी" नामधेयाष्टोत्तरशतहस्तमितो लेखः श्रीगुरूणां प्रेषितः ॥ चातुर्वैद्यवैशारद्यनिधिरुपदेशरत्नाकरप्रमुखग्रंथकारकः ॥ स्तंभतीर्थे 10 दफरखानेन 'वादिगोकुलसंड" इति भणितः, दक्षिणस्यां "कालीसरस्वती" ति प्राप्तविरुदः, अष्टवर्षगणनायकत्वानंतरं वर्षत्रिकं "युगप्रधानपदव्युदयी" ति जनैरुक्तः, अष्टोत्तरशत१०८वर्तुलिकानादोपलक्षकः, बाल्येपि सहस्राभिधानधारकः, संतिकरमिति समहिमस्तवनकरणेन योगिनीकृतमार्युपद्रवनिवारकः चतुर्विंशतिवार२४विधिना सूरिमंत्राराधकः ॥ तेष्वपि चतुर्दशवारं 15 यदुपदेशतः स्वस्वदेशेषु चंपकराजदेपाधारादिराजभिरमारिः प्रवर्तिता ॥ सीरोहीदिशि सहस्रमल्लराजेनाऽप्यमारिप्रवर्तने कृते येन तिड्कोपद्रवो निवारितः ॥

श्रीमुनिसुन्दरसूरेर्वि० षट्त्रिंशदधिके चतुर्दशशत१४३६वर्षेजन्म, त्रिचत्वारिंशदधिके १४४३ व्रतं, षट्षष्ठ्यधिके १४६६ वाचकपदं, अष्टसप्तत्यधिके १४७८ द्वात्रिंशत्सहस्र ३२००० टंकव्ययेन वृद्धनगरीयसं०देव- 20 राजेन सूरिपदं कारितं, त्र्युत्तरपंचदशशत१५०३वर्षे का०शु०प्रतिपत्१दिने स्वर्गभाक् ॥ छ ॥

५२—चावणोत्ति, श्रीमुनिसुन्दरसूरिपट्टे द्विपंचाशत्तमः श्रीरत्नशेखरसूरिः ॥ तस्य वि० सप्तपंचाशदधिके चतुर्दशशत१४५७वर्षे क्वचिद्वा द्विपंचाशदधिके१४५२जन्म, त्रिषष्ठ्यधिके१४६३व्रतं, त्र्यशीत्यधिके१४८३ 25 पंडितपदं, त्रिनवत्यधिके १४९३ वाचकपदं, द्व्युत्तरे पंचदशशते१५०२वर्षे

सूरिपदं, सप्तदशाधिके १५१७ पो०वदिषष्ठी६दिने स्वर्गः ॥ स्तंभतीर्थे बांवी-नाम्ना भट्टेन "बालसरस्वती"ति नाम दत्तं ॥

तत्कृताग्रंथाः—श्राद्धप्रतिक्रमणवृत्ति· १, श्राद्धविधिसूत्रवृत्तिः २, आचारप्रदीपश्चे३ति ॥

तदानीं च लुंकाख्याल्लेखकात् वि०अष्टाधिकपंचदशशत१५०८वर्षे 5 जिनप्रतिमोत्थापनपरं लुंकामतं प्रवृत्तं ॥ तन्मते वेषधरास्तु वि०त्रयस्त्रिंशदधिकपंचदशशत१५३३वर्षे जाताः । तत्र प्रथमो वेषधारी भाणाख्योऽभूदिति ॥ १६ ॥

*॥ तेवण्णो पुण लच्छी-सायर सूरीसरो मुणेअव्वो ५३॥*

*चउवण्णु सुमइ साहू ५४, पणवण्णो हेमविमलगुरू ५५ ॥१७॥* 10

*५३-तत्पट्टे श्रीलक्ष्मीसागरसूरिः ॥ ५४-तत्पट्टे श्रीसुमतिसाधुसूरिः ॥*

*५५-तत्पट्टे श्रीहेमविमलसूरिः ॥*

व्याख्या ५३—तेवण्णोति, श्रीरत्नशेखरसूरिपट्टे त्रिपंचाशत्तमः श्रीलक्ष्मीसागरसूरिः ॥ ×

---

× श्रीलक्ष्मीसागरसूरिशासनवर्तिसूरीणां शिष्यैः सह संख्या चैवं—

श्रीसुधानंदसूरिः शिष्याः २६, श्रीशुभरत्नसूरिः १४ (१८), श्रीसोमजयसूरिः २५, श्रीजिनसोमसूरिः १५, श्रीजिनहंससूरिः ३६, श्रीसुमतिसुन्दरसूरिः ५३, श्रीसुमतिसाधुसूरिः ५७, श्रीराजप्रियसूरिः १२, श्री इन्द्रनन्दिसूरिः ११ । इति नव ॥

उपाध्यायाः—महोपाध्यायश्रीमहीसमुद्रः २६, उपा० श्रीलब्धिसमुद्रः ३१, उ० श्रीअमरनन्दिः २७, उ०श्रीजिनमाणिक्यः ३१, उ०श्रीधर्महंसः १२, उ०श्रीआगममण्डनः १२, उ०श्रीइन्द्रहंसः १०, उ० श्रीगुणसोमः ११, उ०श्रीअनंतहंसः १२, उ०श्रीसंघसाधुः १४ ॥ अन्येपि पंचवाचकाः । इति पञ्चदश ॥ गीतार्थाः—२८६ ॥

मुनयस्तु—तिलकविवेक रुचि राज सहज भूषण कल्याण श्रुत शीति कीर्ति मूर्ति प्रमोद आनन्द नन्दि साधु रत्न मण्डन नन्दन वर्धन ज्ञान दर्शन प्रभ लाभ धर्म

तस्य वि० चतुष्पष्ठ्यधिके चतुर्दशशत१४६४ वर्षे भाद्र० वदि द्वितीयाऽऽदिने जन्म, सप्तत्यधिके-१४७७ दीक्षा, षण्णवत्यधिके १४९६ पंन्यास पदं, एकाधिके पंचदशशत१५०१वर्षे वाचकपदं, अष्टाधिके १५०८ सूरिपदं सप्तदशाधिके १५१७ गच्छनायकपदं ॥

५४—चउवण्णुत्ति, श्रीलक्ष्मीसागरसूरिपट्टे चतुष्पंचाशत्तमः 5 श्रीसुमतिसाधुसूरिः ॥

५५—पणवण्णोत्ति, श्रीसुमतिसाधुसूरिपट्टे पंचपंचाशत्तमः श्रीहेमविमलसूरिः

यः क्रियाशिथिलसाधुसमुदाये वर्तमानोपि साध्वाचारानतिक्रान्तः । यतो ब्रह्मचर्येण निष्परिग्रहतया च सर्व्वजनविख्यातो महायशस्वी संविग्न- 10 साधुसान्निध्यकारी । यद्दीक्षिता यन्निश्रितास्च बहवः साधवः क्रियापरायणा आसन् । एतच्चिह्नं समुदायानुरोधेन क्षमाश्रमणादिविहृतं पकान्नादिकं नात्मना भुक्तवान्

ऋ०हाना–ऋ०श्रीपति–ऋ०गणपति प्रमुखा लुङ्कामतमपास्य श्रीहेमविमलसूरिपार्श्वे प्रव्रज्य तन्निश्रया चारित्रभाजो बभूवांसः ॥ 15

सद्युन्नं कंचिद्व्रतिनं ज्ञात्वा गणान्निष्काशयामास ॥

न च तेषां क्रियाशिथिलसाधुसमुदायावस्थाने चारित्रं न संभवतीति शंकनीयं, एवं सत्यपि गणाधिपतेश्चारित्रसंभवात् ।

यदागमः—साले नामं एगे एरण्डपरिवारे त्ति ॥

तदानीं वि० द्वाषष्ठ्यधिकपंचदशशत१५६२ वर्षे "संप्रति साधवो 20 न दृग्पथमायाती"त्यादिप्ररूपणापरकटुकनाम्नो गृहस्थात् त्रिस्तुतिकमतवासि-

---

सोम संयम हेम क्षेम प्रिय उदय माणिक्य सत्य जय विजय सुन्दर सार धीर वीर चारित्र चन्द्र भद्र समुद्र शेखर सागर सूर मंगल शील कुशल विमल कमल विशाल देव शिव यश कलश हर्ष हंस, इत्यादिपदान्ताः सहस्रशः ॥ महत्तरा आर्या १ ।

—इति श्रीसोमचारित्रगणिविरचिते, गुरुगुणरत्नाकरकाव्ये द्वितीये सर्गे ॥

तोत्कटुकनाम्ना मतोत्पत्तिः ॥ तथा वि०सप्तत्यधिकपंचदशशत१५७०वर्षे लुङ्कामतान्निर्गत्य वीजाख्यवेषधरेण "वीजामती"नाम्ना मतं प्रवर्तितं ॥ तथा वि०द्विसप्तत्यधिकपंचदशशत१५७२वर्षे नागपुरीयतपागणान्निर्गत्य उपाध्यायपार्श्वचंद्रेण स्वनाम्ना मतं प्रादुष्कृतमिति ॥१७॥

सुविहिअमुणिचूडामणि, कुमयतमोमहणमिहिरसममहिमो ।
आणंद विमल सूरी-सरो अ छावण्णपट्टधरो ॥१८॥

५६-तत्पट्टे श्रीआणंदविमलसूरिः ॥

व्याख्या--५६-सुविहियत्ति, श्रीहेमविमलसूरिपट्टे षट्पंचाशत्तमपट्टधरः सुविहितमुनिचूडामणि-कुमततमोमथनसूर्यसममहिमा श्रीआणंदविमलसूरिः ॥

तस्य च वि०सप्तचत्वारिंशदधिके पंचदशशत१५४७वर्षे इलादुर्गे जन्म, द्विपंचाशदधिके १५५२ व्रतं, सप्तत्यधिके १५७० सूरिपदं ॥

तथा यो भगवान् क्रियाशिथिलवहुयतिजनपरिकरितोऽपि संवेगरंगभावितमातः जिनप्रतिमाप्रतिषेध-साधुजनाभावप्रमुखोत्सूत्रप्ररूपणाप्रवलजलप्लाव्यमानं जननिकरमवलोक्य करुणारसावलिप्तचेतो गुर्वाज्ञया कतिचित्संविग्नसाधुसहायो वि० द्व्यशीत्यधिकपंचदशशत१५८२वर्षे शिथिलाचारपरिहाररूपक्रियोद्धरणयानपात्रेण तमुद्धृतवान्, × अनेकानि चेभ्यानामिभ्यपुत्राणां च शतानि कुटुंवधनादिमोहं संत्याज्य प्रव्राजितानि ॥

---

× ५८ तत्पट्टे श्रीआनन्दविमलसूरिः ५६ तत्पट्टे श्रीविजदानसूरिः—( २ ) सं०१५८२ क्रियोद्धार कीधो त्रिणगच्छनायक पाटण विसलनगर वारेजाथी निसरा ॥

६० तत्पट्टे श्रीराजविजयसूरि ६१तत्पट्टे श्रीरत्नविजयसूरि सं०१५६६ लुंकामतफेड्यो मालवोवालो जीयाजी जीत्यो, साहसलेमने प्रतिबोध्यो, मुगता घाटकर्यो सं० १६२४ ॥

इति, मोहनलाल दलीचंद देशाइ इत्यनेन संग्रहीतायां, रत्नशाखा पट्टावल्याम्

(जैनयुग, पु०३, अं० ११-१२)

"यो वादेजयी स नगरादौ स्थास्यति नान्य" इति सुराष्ट्राधिपतिनामांऽकितलेखमादाय सुराष्ट्रे साधुविहारनिमित्तं यदीयश्रावकः सुरत्राणदत्तपर्यस्तिकावाहनः पातसाहिप्रदत्त "मलिकश्रीनगदल" बिरुदः सा० तूणसिंहाख्यः श्रीगुरूणां विज्ञप्तिं कृत्वा संप्रतिभूपतिरिव पंन्यासजगर्षिप्रमुखसाधुविहारं कारितवान् ॥ 5

तथा जेसलमेर्वादिमरुभूमौ जलदौर्लभ्याद्दुष्करोयमितिधिया श्रीसोमप्रभसूरिभिर्यो विहारः प्रतिपिध्ध आसीत् सोपि व्यवहारः कुमतव्याप्तिभिया तत्रत्यजनानुकंपया च भूयोलाभहेतवे पुनरप्यनुज्ञातः । तत्रापि प्रथमं लघुवया अपि शीलेन श्रीस्थूलभद्रकल्पो वैराग्यनिधिर्निःस्पृहावधिर्यावज्जिवं जघन्यतोऽपि षष्ठतपोभिग्रही पारणकेप्याचाम्लादितपोविधायी महोपाध्याय- 10 श्रीविद्यासागरगणिर्विहृतवान् । तेन च जेसलमेर्वादौ खरतरान् मेवातदेशे च बीजामतीप्रभृतीन् मोरव्यादौ (मोख्यादौ) लुङ्कादीन् प्रतिबोध्य सम्यक्त्वबीजमुप्तं सदनेकधावृद्धिमुपागतमद्याऽपि प्रतीतं ॥

तथा पार्श्वचंद्रव्युद्ग्राहिते वीरमग्रामे पार्श्वचंद्रमेव वादे निरुत्तरीकृत्य भूयान् जनो जैनधर्म्मं प्रापितः । एवं मालवकेप्युज्जयिनीप्रभृतिषु ॥ किंबहुना ! 15 संविग्नत्वादिगुणैर्यत्कीर्तिपताका पुनरद्यापि सज्जनवचोवातेनेतस्ततउद्धूयमाना प्रवचनप्रासादशिखरे समुल्लसति ॥

क्रियोद्धारकरणानन्तरं च श्रीआणंदविमलसूरयश्चतुर्दश१४वर्षाणि जघन्यतोपि नियततपोविशेषं विहाय षष्ठतपोभिग्रहिणः चतुर्थषष्ठाभ्यां विंशतिस्थानकाराधनाद्यनेकविकृष्टतपःकारिणश्च वि०पण्णवत्यधिकपंचदशशते 20 १५९६वर्षे चैत्रसितसप्तम्यामाऽऽजन्मातिचाराऽऽद्यालोच्याऽनशनं विधाय च नवभिरुपवासैरहम्मदावादनगरं स्वर्गं विभूषयामासुः ॥१८॥

*॥ सिरिविजयदाणसूरी, पट्टे सगवण्णए अ ५७ अडवण्णे ॥*
*सिरिहीरविजयसूरी, ५८ संपइ तवगणदिणिंदसमा ॥१९॥*

*५७–तत्पट्टे श्रीविजयदानसूरिः ।५८–तत्पट्टे श्रीहीरविजयसूरिः* ॥ 25

व्याख्या—५७–सिरिविजयत्ति, श्रीआनन्दविमलसूरिपट्टे सप्तपंचाशत्तमः श्रीविजयदानसूरिः ॥ येन भगवता स्तंभतीर्था-ऽहम्मदावाद-पत्तन-महीशानक-गन्धारवंदिरादिपु सहामहोत्सवपुरस्सरमनेकजिंनविंवशतानि प्रतिष्ठितानि ॥

यदुपदेशमवाप्य सूरत्राणमहिमूदमान्येन मंत्रिगलराजाऽपरनामकम- 5 लिकश्रीनगदलेनाऽश्रुतपूर्वां पाण्मासीं शत्रुंजयमुक्तिं कारयित्वा सर्वत्र कुंकुमपत्रिकाप्रेरणपुरस्सरसम्मीलिताऽनेकदेश-नगर-ग्रामादिसंघसमेतेन श्रीशत्रुंजययात्रा, मुक्ताफलादिना श्रीशत्रुंजयवर्धापनं श्रीभरतचक्रिवच्चक्रे ॥

तथा यदुपदेशपरायणैर्गांधारीयसा०रामजी अहम्मावादसत्क सं०कुंअरजीप्रभृतिभिः शत्रुंजये चतुर्मुखाऽष्टापदादिप्रासादा देवकुलिकाश्चका- 10 रिताः। उज्जयन्तगिरौ जीर्णप्रासादोद्धारश्च ॥

तथा सूर्यस्येव यस्योदये तारका इवोत्कटवादिनोऽदृश्यतां प्रापुः ॥

यो भगवान् सिद्धांतपारगामी अखण्डितप्रतापाज्ञोऽप्रमत्तया रूपश्रिया च श्रीगौतमप्रतिमो गूर्जर-मालव-मरुस्थली-कुंकुणादिदेशेष्वशेषेष्वप्रतिबद्धविहारी षष्ठाऽष्टमादितपः कुर्वन्नपि यावज्जीवं घृताऽतिरिक्तविकृतिपंचकपरि-15 हारी माद्दृपामपि शिष्याणां श्रुतादिदाने वैश्रमणाऽनुकारी अनेकवारैकादशांगपुस्तकशुद्धिकारी। किंवहुना ! तीर्थंकरइव हितोपदेशादिना परोपकारी सर्वजनप्रतीतः ॥

तस्य वि० त्रिपंचाशदधिके पंचदशशत१५५३वर्पे जामलास्थाने जन्म, द्वापष्ठ्यधिके १५६२ दीक्षा, सप्ताशीत्यधिके १५८७ सूरिपदं, द्वाविंशत्य- 20 धिकपोडशशत१६२२वर्पे वटपल्लयामनशनादिना सम्यगाराधनपुरस्सरं स्वर्गः॥

५८—अडवण्णेत्ति, श्रीविजयदानसूरिपट्टेऽष्टपञ्चाशत्तमाः श्रीहीरविजयसूरयः ॥किंविशिष्टाः? संप्रति तपागच्छे आदित्यसदृशास्तदुद्द्योतकत्वात्। तेपां विक्रमतः त्र्यशीत्यधिके पञ्चदशशतवर्पे १५८३ मार्गशीर्षशुक्लनवमीदिने प्रह्लादनपुरवास्तव्यऊकेशज्ञातीयसा०कुंराभार्यानाथीगृहे जन्म, 25

षण्णवत्यऽधिके१५९६कार्तिकबहुलद्वितीयायां २ पत्तननगरे दीक्षा, सप्ताऽधिके षोडषशतवर्षे १६०७ नारदपुर्यां श्रीऋषभदेवप्रासादे पण्डितपदम्। अष्टाधिके १६०८ माघशुक्लपञ्चमीदिने नारदपुर्यां श्रीवरकाणकपार्श्वनाथसनाथे श्रीनेमिनाथप्रासादे वाचकपदम्। दशाधिके १६१० सीरोहीनगरे सूरिपदम्।

तथा येषां सौभाग्यवैराग्यनिःस्पृहतादिगुणश्रेणेरेकमपि गुणं वचो- 5 गोचरीकर्तुं वाचस्पतिरप्यचतुरः। तथा स्तम्भतीर्थे येषु स्थितेषु तत्रत्य श्रद्धालुभिः टङ्ककानामेका कोटिः प्रभावनादिभिर्व्ययीकृता। येषां चरणविन्यासे प्रतिपदं सुवर्णटङ्करूप्यनाणकमोचनं पुरतश्च मुक्ताफलादिभिः स्वस्तिकरचनं प्रायस्तदुपरि च रौप्यकनाणकमोचनं चेत्यादि संप्रत्यऽपि प्रत्यक्षसिद्धम्।

यैश्च सीरोह्यां श्रीकुन्थुनाथविम्बानां प्रतिष्ठा कृता। तथा नारदपुर्या- 10 मनेकानि जिनविम्बानि प्रतिष्ठितानि। तथा स्तम्भतीर्थाऽहम्मदावादपत्तन नगरादौ अनेकटङ्कलक्षव्ययप्रकृष्टाभिरनेकाभिः प्रतिष्ठाभिः सहस्रशो विम्बानि प्रतिष्ठितानि। येषां च विहारादौ युगप्रधानसमानाऽतिशयाः प्रत्यक्षसिद्धा एव।

तथाऽहम्मदावादनगरे लुङ्कामताऽधिपतिः ऋषिमेघजीनामा स्वकी- 15 यमताऽऽधिपत्यं "दुर्गतिहेतु"रिति मत्वा रज इव परित्यज्य पञ्चविंशति२५-मुनिभिः सह सकलराजाधिराजपातिसाहिश्रीअकब्बरराजाज्ञापूर्वकं तदीयाऽऽतोद्यवादनादिना महामहपुरस्सरं प्रव्रज्य यदीयपादाम्भोजसेवापरायणो जातः। एतादृशं च न कस्याप्याचार्यस्य श्रुतपूर्वम्।×

---

× कुंअरजीऋषिशिष्येण मेघजी ऋषिणा त्रिंशता मुनिभिः साकमकब्बरपातिसाहिदत्ताऽऽआरावास्तव्यरामग्राहसूनुस्थानसिंहाऽऽनीततूर्यनिनादपुरस्सरं दीक्षा जगृहे।

—इति हीरसौभाग्यकाव्ये॥

सप्तविंशतिशिष्यैर्जगृहे। इति विजयप्रशस्तिकाव्यवृत्तौ॥

तस्य वि० सं० १६२९ वर्षे अहमदावादे श्रीविजयसेनसूरिहस्तेन दीक्षा, वि० सं० १६५६ वर्षे वै० शु० ४ सोमदिने स्तंभतीर्थे श्राद्धमालदेवकृतविजयदेवसूरिपदमहोत्सवे उपाध्याय पदं॥ तद्द्वितीयवर्षे एव शंखेश्वरतीर्थे लुंपाकमतत्यागिश्रीनयविजयस्यापि उपाध्यायपदम्॥

किञ्च । येषामशेषसंविग्नसूरिशेखराणामुपदेशात् सहस्रशो गजानां लक्षशो वाजिनां गूर्जर-मालव-विहार-अयोध्या-प्रयाग-फतेहपुर-दिल्ली-लाहुर-मुलतान-क्याबिल-अजमेर-वङ्गालाद्यभिधानानामनेकदेशसमुदायात्मकानां द्वादशसूबानां चाऽधीश्वरो महाराजाधिराजशिरःशेखरः पातिसाहिश्रीअकब्बरनरपतिः स्वकीयाऽखिलदेशेषु षाण्मासिकाऽमारिप्रवर्त्तनं, 5 जीजायाऽभिधानकरमोचनं च विधाय सकललोकेषु जाग्रत्प्रभावभवनं श्रीमज्जिनशासनं जनितवान् । तद्व्यतिकरो विस्तरतः श्रीहीरसौभाग्यकाव्यादिभ्योऽवसेयः । समासतस्त्वेवम्—

एकदा कदाचित् प्रधानपुरुषाणां मुखवार्त्तया श्रीमद्गुरूणां निरुपमशमदमसंवेगवैराग्यादिगुणगणश्रवणतश्चमत्कृतचेतसा 10 पातिसाहिश्रीअकब्बरेण स्वनामाङ्कितं फुरमानं प्रेष्याऽतिबहुमानपुरस्सरं गन्धारबन्दिरात् दिल्लीदेशे आगराख्यनगरासन्नश्रीफतेपुरनगरे दर्शनकृते समाकारिताः सन्तोऽनेकभव्यजनक्षेत्रेषु बोधिबीजं वपन्तः श्रीगुरवः क्रमेण विहारं कुर्वाणाः विक्रमत एकोनचत्वारिंशदधिकषोडशशतवर्षे १६३९ ज्येष्ठबहुलत्रयोदशीदिने तत्र संप्राप्ताः । तदानीमेव च तदीयप्रधानशिरोमणिशेषश्री 15 अबलफजलाख्यद्वारा उपाध्यायश्रीविमलहर्षगणिप्रभृत्यनेकमुनिनिकरपरिकरिताः श्रीसाहिना समं मिलिताः । तदवसरे च श्रीमत्साहिना सादरं स्वागतादि पृष्ट्वा स्वकीयास्थानमण्डपे समुपवेश्य च परमेश्वरस्वरूपं, धर्मस्वरूपं च कीदृशं कथं च परमेश्वरः प्राप्यत इत्यादि धर्मगोचरो विचारः प्रष्टुमारेभे । तदनु श्रीगुरुभिरमृतमधुरया गिराऽष्टादशदोषविधुरपरमेश्वरपञ्चमहाव्रतस्व-20 रूपनिरूपणादिना तथा धर्मोपदेशो ददे यथा आगरादारभ्यतोऽजमेरनगरं यावद्ध्वनि प्रतिक्रोशं कूपिकोपेतमनारान्विधाय स्वकीयाखेटककलाकुशलताप्रकटनकृते प्रतिमनारं शतशो हरिणविषाणारोपणविधानादिना प्राग् हिंसादिकरणरतिरपि स भूपतिर्दयादानयतिसङ्गतिकरणादिप्रवणमतिः सञ्जातः ।

ततोऽतीवसन्तुष्टमनसा श्रीसाहिना प्रोक्तम्। यत् पुत्रकलत्रधनस्वजन देहादिषु निरीहेभ्यः श्रीमद्भ्यो हिरण्यादिदानं न युक्तिमत्। अतो यदस्मदीय-मन्दिरे पुरातनं जैनसिद्धान्तादिपुस्तकं समस्ति, तद्गृहीत्वाऽस्माकमनुग्रहो विधेयः। पश्चात् पुनः पुनराग्रहवशात् तत्समादाय श्रीगुरुभिः आगराख्यनगरे चित्कोशतयाऽमोचि। तत्र साधिकप्रहरं यावद्धर्मगोष्ठीं विधाय श्रीमत्साहिना 5 समनुज्ञाताः श्रीगुरुवो महताडम्बरेण उपाश्रये समाजग्मुः। ततः सकलेऽपि लोके प्रवचनोन्नतिः स्फीतिमती सञ्जाता।

तस्मिन् वर्षे आगराख्यनगरे चतुर्मासककरणान्तरं सुरीपुरे श्रीनेमिजि-नयात्राकृते समागतैः श्रीगुरुभिः पुरातनयोः श्रीऋषभदेव-श्रीनेमिनाथसम्ब-न्धिन्योर्महत्योः प्रतिमयोस्तदानीमेव निर्मितश्रीनेमिजिनपादुकायाश्च प्रतिष्ठा-10 कृता। तदनु, ॥ आगराख्यनगरे सामानसिंहकल्याणमल्लकारितश्रीचिन्ताम-णिपार्श्वनाथादिबिम्बानां प्रतिष्ठा शतशः सुवर्णटङ्कव्ययादिना महामहेन निर्मिता। तत्तीर्थं च प्रथितप्रभावं सञ्जातमस्ति।

ततः श्रीगुरवः पुनरपि फतेपुरनगरे समागत्य श्रीसाहिना साकं मि-लिताः। तदवसरे च प्रहरं यावद्धर्मप्रवृत्तिकरणानन्तरं श्रीसाहिरवदत् यत् 15 श्रीमन्तो मया दर्शनोत्कण्ठितेन दूरदेशादाकारिताः। अस्मदीयं च न किमपि गृह्यते। तेनाऽस्मत्सकाशात् श्रीमद्भिः सचित्तं याचनीयं येन वयं कृतार्था भवामः। तत् सम्यग्विचार्य श्रीगुरुभिस्तदीयाखिलदेशेषु पर्युषणापर्वसत्काऽष्टा-ह्निकायाममारिप्रवर्त्तनं बन्दिजनमोचनं चायाचि, ततो निर्लोभताशान्तताद्य-तिशयितिगुणगणातिचमत्कृतचेतसा श्रीसाहिना अस्मदीयान्यपि चत्वारि 20 दिनानि समधिकानि भवन्त्विति कथयित्वा स्ववशीकृतदेशेषु श्रावणबहुलदश-मीतः प्रारभ्य भाद्रपदशुक्लषष्ठीं यावदमारिप्रवर्त्तनाय द्वादशदिनामारिसत्का-नि काञ्चनरचनाञ्चितानि स्वनामङ्कितानि पट्ट फुरमानानि त्वरितमेव श्रीगुरूणां समर्पितानि। तेषां व्यक्तिः—प्रथमं गूर्जरदेशीयं, द्वितीयं मालवदेशसत्कं, तृतीयं अजमेरदेशीयं, चतुर्थं दिल्लीफतेपुरदेशसम्बन्धि, पञ्चमं लाहुरमुलता 25

नमण्डलसत्कम्, श्रीगुरूणां पार्श्वे रक्षणाय षष्ठं देशपंचकसम्बन्धि साधारणं चेति। तेषां च तत्तद्देशेषु प्रेषणेनाऽमारिपटहोद्घोषणवारिणा सिक्ता सती पुराऽज्ञायमाननाम्नाऽपि कृपावल्ली सर्वत्रार्याऽनार्यकुलमण्डपेषु विस्तारवती बभूव।

तथा बन्दिजनमोचनस्याप्यङ्गीकारपुरस्सरं श्रीसाहिना श्रीगुरूणां 5 पार्श्वादुत्थाय तदैवाऽनेकगव्यूतमिते डाबरनाम्नि महासरसि गत्वा साधुसमक्षं स्वहस्तेन नानाजातीयानां देशान्तरीयजनप्राभृतीकृतानां पक्षिणां मोचनं चक्रे। तथा प्रभाते कारागारस्थबहुजनानां बन्धनभञ्जनमप्यकारि। एवमनेकशः श्रीमत्साहेर्मिलनेन श्रीगुरूणां धरित्रीमरुमण्डलादिषु श्रीजिनप्रासादोपाश्रयाणामुपद्रवनिवारणायानेकफुरमानविधापनादिना प्रवचनप्रभावनादिप्रभावो 10 यो लाभोऽभवत् स केन वर्णयितुं शक्यते ?।

तदवसरे च संजातगुरुतरगुरुभक्तिरागेण मेडतीयसा०सदारंगेण मार्गणगणेभ्यो मूर्त्तिमद्गजदानद्विपशदऽश्वदानलक्षप्रासादविधानादिना, दिल्लीदेशे श्राद्धानां प्रतिगृहं सेरद्वयप्रमाणखण्डलम्भनिकानिर्माणादिना च श्रीजिनशासनोन्नतिश्चक्रे। तथैका प्रतिष्ठा सा० थानसिंघकारिता। अपरा च सा० 15 दूजणमल्लकारिता श्रीफतेपुरनगरे ऽनेकटङ्कलक्षव्ययादिना महामहोत्सवोपेता विहिता। किञ्च।

प्रथमचतुर्मासकमागराख्यद्रङ्गे, द्वितीयं फतेपुरे, तृतीयमभिरामाबादे, चतुर्थं पुनरप्यागराख्ये चेति चतुर्मासीचतुष्टयं तत्र देशेकृत्वा गूर्जरदेशस्थश्रीविजयसेनप्रभृतिसंघस्याऽऽग्रहवशात् श्रीगुरुचरणा धरित्रीपवित्रीकरणप्रव- 20 णान्तःकरणाः श्रीशेषूजी-श्रीपाहूजी-श्रीदानीआराऽभिधपुत्रादिप्रवरपरिकराणां श्रीमत्साहिपुरन्दराणां पार्श्वे फुरमानादिकार्यकरणतत्परानुपाध्यायश्रीशांतिचंद्रगणिवरान् मुक्त्वा, मेडतादिमार्गे विहारं कुर्वाणा नागपुरे चतुर्मासीं विधाय क्रमेण सीरोहीनगरे समागताः। तत्रापि नवीनचतुर्मुखप्रासादे श्रीआदिनाथादिबिम्बनां श्रीअजितजिनप्रासादे श्रीअजितजिनादिबिंबानां 25

च क्रमेण प्रतिष्ठाद्वयं विधाय अर्बुदाचले यात्रार्थं प्रस्थिताः तत्र विधिना यात्रां विधाय यावद्धरित्रीदिशि पादावधारणं विदधति तावत् महाराय श्रीसुलतानजीकेन सीरोहीदेशे पुरा कराऽतिपीडितस्य लोकस्य अथ पीडां न विधास्यामि, मारिनिवारणं च करिष्यामीत्यादिविज्ञप्तिं स्वप्रधानपुरुषमुखेन विधाय श्रीगुरवः सीरोह्यां चतुर्मासीकरणायाऽत्याग्रहात् समाकारिताः। 5 पश्चात् तद्राजोपरोधेन, तद्देशीयलोकानुकम्पया च तत्र चतुर्मासीं विधायक्रमेण रोहसरोतरामार्गे विहारं कुर्वन्तः श्रीपत्तननगरं पावितवन्तः। अथ पुरा श्री सूरिराजैः श्रीसाहिहृदयाऽऽलवालरोपिता कृपालतोपाध्यायश्रीशान्तिचन्द्रगणिभिः स्वोपज्ञकृपारसकोशाख्यशास्त्रश्रावणजलेन सिक्ता सती वृद्धिमती बभूव। तदभिज्ञानं च श्रीमत्साहिजन्मसम्बन्धी मासः, श्रीपर्युषणापर्व- 10 सत्कानि द्वादशदिनानि सर्वेऽपि रविवाराः, सर्वसंक्रान्तितिथयः नवरोजसत्को मासः सर्वे ईदीवासराः, सर्वे मिहरवासराः, सोफीआनकवासराश्चेति पाण्मासिकामारिसत्कं फुरमानं जीजीआभिधानकरमोचनसत्कानि फुरमानानि च श्रीमत्साहिपार्श्वात्समानीय धरित्रीदेशे श्रीगुरुणां प्राभृतीकृतानीति। एतच्च सर्वजनप्रतीमेव। तत्र नव- 15 रोजादिवासराणां व्यक्तिस्तत्फुरमानतोऽवसेया। किञ्च। अस्मिन् दिल्ली देशविहारे श्रीमद्गुरूणां श्रीमत्साहिप्रदत्तबहुमानतः निष्प्रतिमरूपादिगुणगणानां श्रवणवीक्षणतश्चानेकम्लेच्छादिजातीया अपि सद्यो मद्यमांसाशनजीवहिंसनादिरतिं परित्यज्य सद्धर्मकर्मासक्तमतयः, तथा केचन प्रवचनप्रत्यनीका अपि निर्भरभक्तिरतयः अन्य पक्षीया अपि कक्षीकृतसद् 20 भूतोद्भूतगुणततयश्चासन्। इत्याद्यनेकेऽवदाताः षड्दर्शनप्रतीता एव।

तथा श्रीपत्तननगरे चतुर्मासककरणादनु विक्रमतः षट्चत्वारिंशदधिकषोडशशत१६४६वर्षे स्तम्भतीर्थे सो० तेजपालकारिता सहस्रशो रूप्यकव्ययादिनाऽतीवश्रेष्ठां प्रतिष्ठां विधाय श्रीजिनशासनोन्नतिं तन्वानाः श्रीसूरिराजो विजयन्ते ॥१६॥ 25

*सिरिविजयसेणसूरि-प्पमुहेहिं ऽणेगसाहुवग्गेहिं ॥*
*परिकलिआ पुहविअले, विहरन्ता दिंतु मे भद्दं ॥२०॥*

*५८—श्रीहीरविजयसूरिः ॥५९-तत्पट्टे श्रीविजयसेनसूरिः ॥*

व्याख्या—सिरित्ति, ते च श्री हीरविजयसूरयः संप्रति ५९ विजयसेन सूरिप्रभृत्यनेकसाधुभिः परिकलिताः पृथ्वीतले विहारं कुर्वाणा मे मम 5 भद्रं प्रयच्छन्तु ॥२०॥

॥ इति तवगच्छपट्टावलीसुत्तं सम्मत्तं ॥

इति महोपाध्यायश्रीधर्मसागरगणिविरचिता
श्रीतपागच्छपट्टावलीसूत्रवृत्तिः समाप्ता ॥छ॥

तथा चेयं, श्रीहीरविजयसूरीणां निर्देशात् उपाध्यायश्रीविमल—10 हर्षगणि—उपाध्यायश्रीकल्याणविजय गणि—उपाध्यायश्रीसोमविजय गणि-पं० लब्धिसागरगणिप्रमुखगीतार्थैः संभूय संवत् १६४८ वर्षेचैत्रवहुल-षष्ठी ६ शुक्रे अहम्मदावादनगरे श्रीमुनिसुंदरसूरिकृतगुर्वावली—जीर्णपट्टा-वली—दुष्पमासंघस्तोत्रयंत्राद्यनुसारेण संशोधिता । तथापि यत्किंचित् शोध-नार्हं भवति, तन्मध्यस्थगीतार्थैः संशोध्यं ॥ 15

किंचाऽस्याः पट्टावल्याः शोधनात्प्राग् बहव आदर्शाः संजाताः सन्ति ते चास्योपरि संशोध्य वाचनीया नत्वन्यथेति श्रीमत्परमगुरूणामनुशिष्टि-रिति ॥

वाचकशिरोवतंसश्रीमत्कल्याणविजयगणिशिष्यः ।
प्रथमादर्शं सम्यग्विचार्य शिवविजयगणिरलिखत् ॥१॥ 20

इतिश्रीगुर्वावलीवृत्तिः सम्पूर्णा ॥

पट्टपरंपरएणं वायगसिरिधम्मसायरगुरूहिं ॥
परिसंखाया सिरिमंतसूरिणो दिंतु सिद्धिसुहं ॥२१॥

इयं गाथा शिष्यकृता ॥छः॥छः॥

---

अनुपूर्त्तिः १—

# श्रीतपागच्छपति गुणपद्धतिः

( कर्त्ता—उपाध्यायश्रीगुणविजयगणिः )



अथाग्रेतना पट्टावली पुरतोऽनुसन्धीयते—

*सिरविजयसेणसूरी, पट्टे गुणसट्ठिमे अ ।*

व्याख्या ५९—'सिरिविजयसेणसूरि'त्ति एकोनषष्ठितमे पट्टे श्रीविजयसेनसूरिः । तच्चरित्रं विस्तरतः श्रीविजयप्रशस्तिकाव्यतोऽवसेयं समासतस्त्वेवम्-संवत्१६०४वर्षे नारदपुर्यां जन्म, सं०१६१३वर्षे पितृमातृभ्यां सह श्रीविजयदानसूरिहस्ते दीक्षा, ततः श्रीहीरविजयसूरिभिः सर्वशास्त्राणि पाठयित्वा डीसाख्यग्रामे ध्यानं कृत्वाः सं० १६२८वर्षे फाल्गुनशुक्लसप्तम्यां श्रीअहम्मदावादे 5 सूरिपदं प्रदत्तं । तदनन्तरं सर्वप्रकारेण श्रीतपागच्छे ज्ञानदर्शनचारित्रादि समृद्धिः शिष्याणां श्रावकाणां च वृद्धिश्च जाता । यतस्तस्मिन् वर्षे ऋषिमेघजीमुख्या लुङ्काख्यमतमुख्यास्तत्रत्याधिपत्यं हित्वा सर्प्पः कञ्चुलिकामिव तत्कुमतवासनां त्यक्त्वा श्रीतपागच्छगुरूणां शिष्यतां प्राप्ताः, तत्स्वरूपं तु प्राग् निरूपितं । ततः श्रीहीरविजयसूरयः १६३९वर्षे शाहिश्रीअकब्बरेण 10 आकारिता यथा सन्मानिताः, तद्व्यतिकरोऽपि पूर्वं प्रकाशितः । ततः क्रमेण श्रीहीरविजयसूरयः श्रीविजयसेनसूरिभिः सार्द्धं श्रीराजधन्यपुरे चतुर्मासीमासीनास्तस्मिन्नवसरे लाहोरनगरस्थेन श्रीअकब्बरसुरत्राणेन श्रीमदाचार्यगुणगणाकर्णनप्रीतान्तःकरणेन तदाकारणाय स्फुरन्मानं प्रैपि । ततः श्रीगुरूणामाज्ञां शेषामिवशीर्षे निधाय ततश्चलन्तः पत्तनप्रभृतिनगराणि बहून् ग्रामांश्च 15 पवित्रयन्तोऽनेकसङ्घलोकैः पूजिताः परिवृताश्च श्रीअर्बुदाचलतीर्थयात्रां

विधाय श्रीसीरोहीनगरे प्राप्तास्तदा तन्नायकेन राज्ञा श्रीसुरत्राणसञ्ज्ञेन, बह्वाडम्बरपूर्वकं सन्मानिताः। ततः क्रमेण श्रीराणपुर—वरकाणकपार्श्वनाथादियात्रां कृत्वा स्वजन्मनगरीं नारदपुरीं च गत्वा क्रमेण मेदनीपुर—डीण्डूयाणक—वैराट—महिमनगरादिषु भव्यलोकान् कोकान् सूर्या इव श्रीसूरिधुर्या उद्बोधयन्तो लोधिआणाग्रामे समेयुः। तत्र श्रीशाहिमान्यशेखश्रीअबलफजल- 5 भ्रातृजन्मा फयजीनामा श्रीसूरीन्नन्तुमागतः। तत्रानेकलोकविधीयमानबहुमानस्वरूपं स्पष्टाष्टावधानादिसाधकशिष्यश्रेणिस्वरूपं च दृष्ट्वाऽतीवचमत्कृतचेतास्ततस्त्वरितं लाहोरनगरे गत्वा श्रीशाहिपुरतस्तमुदन्तं यथादृष्टमभ्यधात्। तच्छ्रुत्वा शाहिरपि घनाघनान्नीलकण्ठ इव श्रीगुरून् द्रष्टुं सोत्कण्ठोऽभूत्। ततः क्रमेण श्रीसूरयोऽपि शाहिप्रदत्तोच्चढ्वाद्यवादनानेकानेकतुरङ्गमविचित्र- 10 वैजयन्तीतोरणधोरणीरमणीयमहामहपुरस्सरं लाभपुरं पुरं प्रविश्य तद्दिन एव श्रीशेखजीदरबारीरामदासप्रमुखप्रधानपुरुषद्वारा काश्मीरीमहलनाम्नि धाम्नि श्रीशाहेर्मिलिताः। शाहिरपि गुरून् वीक्ष्य परमप्रमोदमेदुरः सन् श्रीहीरविजयसूरीणामुदन्तं वर्त्मनि कुशलोदन्तं च पृष्टवान्। श्रीगुरुभिरपि श्रीहीरसूरिभिर्भवतां धर्माशीर्वादो दत्तोऽस्तीत्याद्युक्तं। भृशं तुष्टः सन्नष्टावधानानि 15 द्रष्टुकामोऽस्मीति गुरूनाचष्ट। ततो गुर्वाज्ञया गुरुशिष्यश्रीनन्दविजयाभिधविबुधसाधिताष्टावधानानि द्रष्ट्वा वचनागोचरं चमत्कारं प्राप्तः। प्रसन्नः सन् महाऽऽडम्बरपूर्वकं स्वस्थानं प्रापयतामिति स्वजनानादिश्य स्वं धामागमत्। अथेष्टवस्त्रोपदिष्टमितिमन्यमानै राजमान्यैर्वदान्यैस्तत्रत्यास्तिकजनैरष्टदिनानि यावत् केवलं रूप्यकैरेव प्रभावनाद्याडम्बरस्तथा कृतो यथा जैनं राज्यमेक- 20 च्छत्रमिवजातमिति। गुरूणां गौरवमसहमानेन केनचिद् भट्टेन—अमी जैना जगदीश्वरं १ भास्करं २ गंगां ३ च नमन्यन्ते तेन हे श्रीशाहे! भवादृशां भूभुजां नैतेषां दर्शनं योग्यमिति श्रुत्वा गुप्तकोपो भूपोऽन्यदा समायातान् श्री अनूचानपुङ्गवान् तद् द्विजोक्तमुक्तवान्। ततस्तत्खलविलसितं मत्वा तत्कालोत्पन्नस्वसमयपरसमयस्मृतिसूक्तिशुक्तिसमुद्रैः श्रीसूरीन्द्रैस्तदीयशास्त्रसम्मत्यैव 25 स्वाभीष्टजगदीश्वर—स्वरूपं निरूपितं।

यथा—यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो,
बौद्धा बुद्ध इति प्रमाणपटवः कर्मेति मीमांसकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्त्तेति नैयायिकाः,
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥१॥

अनेन तद्ग्रन्थोक्तकाव्येन तदीयशास्त्रशस्त्रेणैव तन्मदच्छेदश्चक्रे । 5
इति प्रथमं जगदीश्वरांगीकारप्रश्नोत्तरम् ।

अधामधामधामेदं, वयमेव स्वचेतसि ।
यस्यास्तव्यसने प्राप्ते, त्यजामो भोजनोदके ॥१॥

इत्यादियुक्तिभिर्द्वितीयं सूर्याङ्गीकारोत्तरम् ।

तथा गङ्गोदकमन्तराऽस्माकं देवप्रतिष्ठेव न स्यात्,इति तृतीयं गङ्गाङ्गीकारो 10
त्तरम् । इति गुरुकवाक्यैः प्रहृष्टः शाहिः श्रीगुरूणां सन्मानं दत्वा खलांस्तिरस्कृतवान् । ततस्तत्र द्रङ्गे श्रीशाहेराग्रहेण चतुर्मासकद्वयं विधाय एकदा पुण्योपदेशश्रवणे प्रमुदितेन शाहिना किंचिद्याचस्वमित्युक्ते श्रीसूरिः स्माह—हे श्रीशाहे ! गो १, वृषभ २, महिप ३, महिषी ४, हननं, मृतद्रव्यादानं ५, बन्दिग्रहणं ६ चेति षड्जल्पास्तव जगज्जनदुःखभंजकस्य नार्हन्तीति, एतेषां जल्पानां हान- 15
मेवास्माकं मुदां श्रीशाहीनां च सम्पदां निदानमित्युक्तेस्तुष्टेन श्रीशाहिना तत् षड्जल्पस्फुरन्मानं श्रीसूरिनाम्नैव सर्वत्र प्रहिनम् । अस्मिन्नवसरे श्रीहीरसूरिभिर्बाधावशादन्तिममिलनाय लेखप्रेषणपूर्वमाकारिताः संतस्तत्रविचित्रवादि लब्धजयवादाः श्रीसूरिपादाः शीघ्रमेव गुर्वाकारणं कारणमवमत्य चतुर्मासक मध्येऽपि चलन्तोऽविच्छिन्नप्रयाणैर्मरुमण्डलमण्डलीभवन्तः क्रमेण श्रीपत्तनं 20
प्राप्तवन्तः । तत्र श्रीहीरसूरीणां स्वर्गमनमूनाख्यद्रङ्गे सञ्जातं श्रुत्वा तत्संसारस्वभावमनुभाव्यत्यक्तशोकाः सुखप्राज्यंतपागच्छसाम्राज्यं पालयामासुः ।

अथ तेषां सुकृतकृत्यानि लिख्यते । यथा—तैश्चम्पानेरदुर्गे १६३२वर्षे प्रतिष्ठाकृता । ततः सूरतिबन्दिरे श्रीमिश्र—चिन्तामणिप्रमुखेषु भट्टेषु सभ्येषु सत्सु अनेकपण्डितपर्षदि श्रीसूरिभिः समं विवादं कुर्वन् श्रीभूषणनामा दिगम्ब- 25
राचार्यो यथातथाऽपसिद्धान्तं जल्पन् जैनशास्त्रशैवशास्त्रपारगैर्गुरुभिर्निर्जितस्ततः काकनाशंननाश । अथ निश्शेषलोकक्रियमाणजयारवपूर्वकं श्रीसूरयःस्वं

पदं प्रापुः । ततः क्रमाद् राजनगरे श्रीखानखानाख्यक्ष्मापपर्षदि जयश्रियं शिश्रियुः । अथ तत्रैव श्रीविद्याविजयनामकं स्वपदयोग्यं शिष्यं दीक्षयित्वा, श्रा० अहिवदेकारितां प्रतिष्ठां, पुनर्गन्धारबन्दिरे सा०इन्द्रजीकारितां श्रीवीरप्रतिष्ठां, पुनः स्तम्भतीर्थे श्रा०धनाईकारितां प्रतिष्ठां च कृत्वा तत्र चतुर्मासीं चक्रुः । ततः पारणे मेवातदेशादागतान् श्रीहीरसूरीन् सोरोहीनगरे नत्वा स्तम्भतीर्थं पुन- 5 रागत्य प० वजिआराजिआख्यकारितश्रीचिन्तामणिपार्श्वनाथप्रतिष्ठां कृत्वा, क्रमेण १६५४ वर्षे ऽहम्मदावादे भूमध्यान्निर्गतां श्रीविजयचिंतामणिपार्श्वमूर्तिं शकन्दरपुरेऽस्थापयत् । पुनस्तत्रैव वर्षे सा० मोटाख्यकारितां प्रतिष्ठां, पुनः दो० लहुआख्यकारितां प्रतिष्ठां कृत्वा लाटा [प] ल्यां ध्यानं विधाय क्रमात् श्रीगुर्जरतीर्थयात्रां श्रीसौराष्ट्रे शत्रुञ्जयादितीर्थयात्रां च कृत्वा स्तम्भतीर्थे 10 श्रीविजयदेवसूरीणां सूरिपदं दत्वा पुनर्वर्षद्वयान्ते १६५८वर्षे पत्तने गच्छानुज्ञां नंदिं च कृत्वा श्रीशङ्खेश्वरतीर्थयात्रायै समेतात् श्रीआचार्यसंयुतान् श्रीपूज्यान् द्वादशशतसंकटः सप्तशतीकरभतुरगोद्भटानेकसुभटविकटः सङ्घपतिहेमराजसङ्घो मरुस्थलीतः शत्रुञ्जययात्रार्थं व्रजन् महोत्सवेन प्राणमत् । ततःश्रीगुरवो राजनगरे चतुर्मासीं चक्रुस्तदा तत्रत्यैः श्राद्धैः श्रीगुरुवाक्प्रबुद्धैः पञ्चसप्तत्याद्यङ्गुलार्ह- 15 त्प्रतिमाणां महाडम्बरविशिष्टाः षट्प्रतिष्ठाः कारिताः । पुनस्तत्रत्येन सं०सूराख्येन प्रतिश्राद्धगृहं महिमुन्दिकां प्रयच्छता श्रीअर्बुदाद्रिश्रीराणपुरादिसकलतीर्थयात्रामासूत्र्य क्षेमेणागत्य श्रीसूरीन् प्रणत्य महती प्रभावना कृता । किंबहुना तत्राब्दे श्राद्धैर्महिमुन्दिकालक्षमेकं व्ययीकृतं । ततो राजधन्यपुरे प्रतिष्ठाद्वयं पुनः स्तम्भतीर्थे प्रतिष्ठामेकामकब्बरपुरे च गंधारबन्दिरे च प्रतिष्ठाद्वयं कृत्वा क्रमेण 20 सौराष्ट्रराष्ट्रसङ्घाग्रहेण श्रीशत्रुञ्जययात्रां विधाय तत्रदेशे चतुर्मासकत्रयं प्रतिष्ठाऽष्टकं च कृत्वा रैवताद्रियात्रापूर्वं नवीननगरे ज्येष्ठस्थितिं स्थित्वा श्रीजामनामकं नृपं धर्मोपदेशतस्तुष्टं कृत्वा ततश्चलन्तः श्रीशंखेश्वरपार्श्वं प्रणम्य राजनगरे चतुर्मासीं वह्वाडम्बरविशिष्टां प्रतिष्ठां चतुष्टयीं च चक्रुः । इत्याद्यनेकसुकृत्यैर्जिनशासनं प्रभावयन्तोऽनेकसहस्रजिनप्रतिमाः पञ्चाशत्प्रतिष्ठासु प्रति- 25 ष्ठापयन्तो विमलाचलतारङ्गनारंगपुरशङ्खेश्वरपंचासरराणपुरारासणविद्या-

नगरादिषु जीर्णोद्धारान् पुण्योपदेशद्वारा कारापयन्तो हस्तसिद्धया च श्रीगौतमावतारा इव, बुद्धया चाभयकुमारा इव, विद्यया चाभिनववज्रकुमारा इव, कृतज्ञतया श्रीरामचन्द्रा इव, धैर्येण गिरीन्द्रा इव, आज्ञया च सुरेन्द्रा इव, एकस्यार्थस्य शतार्थित्वेन श्रीसोमप्रभसूरय इव श्रीविजयसेनसूरयोऽष्टौ वाचकपदानि सार्द्धशतपण्डितपदानि च दत्वा द्विसहस्रीमितसंयतिसमुदायस्याशां 5 पूरयित्वा सवाईहीरविजयसूरिरितिविरुद्धारका भट्टारकत्वं विंशतिवर्षाणि प्रपाल्याकब्बरपुरे १६७१ वर्षे ज्येष्ठकृष्णैकादश्यां स्वर्गं जग्मुः।

*सट्ठिअमे सिरिविजयदेवसूरी संवइ तवगणतरणितुल्लो ॥१॥२१॥*

षष्टितमे पट्टे श्रीविजयदेवसूरिः। तद्वृत्तमपि यथादृष्टं कियल्लिख्यते यथा श्रीराजदेशमण्डले ईडरदुर्गे सम्वत् १६३४ वर्षे जन्म। ततो नवमे वर्षे- 10 १६४३ वर्षे जनन्या सह दीक्षा। ततः १६५५ वर्षे पण्डितपदं। ततोनुक्रमेण १६५६ वर्षे स्तम्भतीर्थे सूरिपदं। तद्व्यतिकरो यथा-सर्वव्यवहारिश्रेणिशिरोमणि सा० श्रीमल्लनामा स्वभ्रातृजन्मना सा० सोमाख्येन सह श्रीआचार्यपदस्थापनार्थमर्थव्ययं कर्त्तुकामः प्रकामप्रमोदेन मरुमेदपाटलाटसौराष्ट्रकच्छकुङ्कणादिदेशेषु गुर्जरदेशे च प्रतिग्रामं प्रतिनगरं कुंकुमपत्रिकाप्रेषणा पूर्वं सङ्घलो- 15 कान् सहस्रशः समाहूय तपागणयतियतिनीसप्तशतीमितपरिकरमाकारितवान्। अथ सकलसङ्घमिलनानन्तरं श्रीमल्लसाधुना बन्धुरताऽधरीकृतसुरमन्दिरे निजमन्दिरे दिव्यदुकूलकमनीयमण्डपं शक्रमण्डपमिव निर्माय विज्ञप्ताः श्रीविजयसेनसूरयो वैसाखशुद्धचतुर्थ्यां चतुर्थे रवियोगे कुमारयोगे मृगांकमृगशिरः संयोगाद् अमृतसिद्धियोगेऽपि च श्रीविजयदेवसूरिरिति नामस्थापनपूर्वकं 20 सूरिपदं ददुः। अथ श्रीमल्लसाधुना संतुष्टेन सङ्घभक्तिस्तथाचक्रे यथा कल्पवृक्ष एवायमिति मेने। किंबहुना तस्मिन्महे सा० श्रीमल्लेन दशसहस्ररूप्यकव्ययः कृतः। ततस्तदग्रेतनदिने तत्रत्येन ठक्करकीकाख्येन तत्पदोत्सवनिमित्तमेवाष्टसहस्ररूप्यकव्ययपूर्वं प्रतिष्ठा कारिता। एवं सर्वसंख्यया श्रीविजयदेवसूरीणां पदमहे पंचाशत्सहस्रप्रमिता महिमुन्दिका व्ययिताः। ततः १६५८ वर्षे पत्तने 25 परीक्षकसहस्रवीरसंज्ञेन पञ्चसहस्रमहिमुन्दिकाव्ययपूर्वकं गच्छानुज्ञानन्दिम-

ह्ब्रक्रे । अथ श्रीविजयदेवसूरयोऽहम्मदावादे प्रतिष्ठाद्वयं, पत्तने प्रतिष्ठाचतुष्टयं, स्तम्भतीर्थे प्रतिष्ठात्रयं बहुद्रव्यव्ययपूर्वकं कृत्वा स्वजन्मभूमौ श्रीइलादुर्गे चतुर्मासीं चक्रुः । तदा तत्रत्यैः संघलोकैरनेके महोत्सवाः कृताः । तन्माहात्म्यहृष्टो राजा श्रीकल्याणमल्लनामा [ चिन्ता ] मणिपाठिमहाभट्टचट्टवेष्टितः प्रतिश्रयं प्राप्तस्तर्कवादमकारयत् । तदा तेषां सूरीणां पुण्योदयात्पार्श्ववर्तिभिर्वादिदर्प- 5
सर्पगरुडरत्नैः पण्डितपद्मसागरगणिगीतार्थशिरोरत्नैरेव सर्वेऽपि भट्टास्तथा निर्जिता यथा लज्जिताः सन्तोऽहो गुरूणां गुरुतेति स्तुवन्तो राजेन्द्रमुख्याः स्वाश्रयं प्रापुः । तदा तत्र महती प्रभावना जाता । ततो बृहन्नगरे वीरप्रतिष्ठां कृत्वा राजनगरे चतुर्मासीं स्थिताः । तत्रावसरे इलादुर्गे श्रीऋषभदेवबिम्बं यवनैर्व्यङ्गितं ततस्तत्प्रमाणमेव नवीनं बिम्बं श्राद्धैर्विधाप्य नटीपद्रे महत्यां प्रतिष्ठायां 10
श्रीसूरिभिः प्रतिष्ठाप्य गिरिशिरःस्थचैत्यचैत्योद्धारपूर्वकं स्थापितं । ततोऽन्यदा श्रीमण्डपाचले श्रीअकब्बरपातिशाहिपुत्रजिहांगरश्रीसलेमशाहिः श्रीसूरीन् स्तम्भतीर्थतः सबहुमानमाकार्य गुरूणां मूर्तिं रूपस्फूर्तिं च वीक्ष्य वचनागोचरं चमत्कारमाप्तवान् । ततः समये श्रीगुरुभिः समं धर्मगोष्ठीक्षणे विचित्रधर्मवार्त्तां पृष्ट्वा साक्षाद् गुरुस्वरूपं निरुपमं दृष्ट्वा च स्वपक्षीयैः परैः प्राक् किंचिद् 15
व्युद्ग्राहितोऽपि शाहिस्तदा तत्पुण्यप्रकर्षेण हर्षितः सन् श्रीहीरसूरीणां श्रीविजयसेनसूरीणां च पट्टे एत एव पट्टधराः सर्वाधिपत्यभाजो भवन्तु, नापरः कोऽपि कूपमण्डूकप्राय इत्यादि भूयः प्रशंसां सृजन् जिहांगीरीमहातपाबिरुदं दत्तवान्, अनुज्ञापितवांश्च तपागच्छश्रावकेन्द्रचन्द्रपालादीन् यदस्मदीयदक्षिणीयमहावाद्यवादनपूर्वकं गुरून् स्वाश्रयं प्रेषयन्तु यथा युष्मद्गुरून् 20
वयमपि गवाक्षस्था निरीक्ष्य हृष्टा भवामः । इत्यादिवचनोत्साहितैस्तै राजमान्यसंघैर्दाक्षिणात्यमालवीयसंघैश्च तथा महोत्सवाः कृता यथा तपागणसङ्घमुखे पूर्णिमाऽवतीर्णा अन्येषां च गुरुद्विषां मुखेऽमावास्येति । किंबहुना ? यथा पुराऽकब्बरेण श्रीहीरसूरयस्ततोऽप्याधिक्येन श्रीविजयदेवसूरयः शाहिजिहांगीरेण सन्मानिता इति । अथ श्रीगुरवो गुर्जरदेशान्तर्भूत्वा सौराष्ट्रदे- 25
शसुन्दरे द्वीपबन्दिरे फरङ्गीपातशाहिप्रदत्तव्याख्यानानुज्ञापूर्वं चतुर्मासकद्वयीं

च कृत्वा क्रमेण हलारदेशे श्रीनवानगरे चानेकलोकान् बोधिदानेन सुखयन्तः श्रीशत्रुञ्जये यात्रां विधाय स्तम्भतीर्थे चतुर्मासकं च निर्माय सावलीस्थाने सोनीरत्नसीक्रियमाणामारिपटहप्रदाने तीव्रक्रियाकष्टानुष्ठानपूर्वकं सूरिमंत्र-सत्कं मासत्रयध्यानं विधायाश्वयतृतीयायां सभामभ्येयुः। ततस्तत्रैव चतुर्मासीं प्रतिष्ठाद्वयीं च कृत्वा श्रीइलादुर्गे प्रतिष्ठात्रयं कृतवन्तः। ततः संघेन सार्द्धं 5 श्रीआरासणादितीर्थयात्रां कुर्वाणाः पोसीनाख्यपुरे पुराणानां पंचप्रासादानां श्राद्धानामुपदेशद्वारेण बहुद्रव्यव्ययसाध्यमपि तदुद्धारं कारितवन्तः। क्रमेण चारासणे मूलनायकाः पुनः प्रतिष्ठाविपर्यीकृत्य स्थापिताः। कालान्तरेण च इलादुर्गे श्रीकल्याणमल्लनरेन्द्राग्रहादागत्य तत्रस्थ सा० सहजूगृहे महामहेन-१६८१ वर्षे वैशाखशुद्धषष्ठ्यां श्रीविजयसिंहसूरीन् स्वपदेऽस्थापयत्। 10

तन्महोत्सवात्तुष्टः कल्याणराजोऽपि रणमल्लचोकीनामके गिरिशृंगे श्रीगुरून् समाहूय धर्मगोष्ठीं विधाय तत्स्थानं नवीनचैत्यस्थापनाय गुरुपुरः प्राभृतीकृतवान्। अथ च तत्र चैत्यमद्यापि निष्पाद्यमानमस्ति। ततश्चतुर्मा-सान्ते मरुदेशसङ्घवनाग्रहात् श्रीगुरवोऽनूचानान्विता अनेकलोकपरिवृताः श्रीअर्बुदाचलतीर्थं नमस्कृत्य सा० तेजपालेन विधीयमानां महामहमनोहरां 15 श्रीसीरोहीमागत्य चतुर्मासीं तस्थुः। तत्र च श्रीजावलपुरप्रमुखतत्परिसरसंङ्घ-लोकैर्जङ्गमं तीर्थमागतं मन्यमानैर्बहुतरद्रव्यव्ययपूर्वकमागत्य वन्दिताः। तत्रावसरे सादडीसत्कलुम्पाकैश्चैत्यार्चाद्यसद्भावविपयिणी महती जिनशास-नाशातना कृता। ततस्तत्रत्यैर्निर्बलैः श्रावकैः सीरोह्यामागत्य श्रीगुरवो विज्ञप्ताः यद्युष्मादृशेपु गुरुपु सत्सु वयं वराकैर्लुम्पाकैः पराभूताः स्मस्तेनास्मत्सा- 20 हाय्यं विधीयताम्। इत्युक्तेः शीघ्रमेव गुरुप्रेषितैर्गीतार्थैरेव तत्र गत्वा तद्वेप-धारिणो भास्करैर्घूका इव मूकतां प्रापिताः। ततोऽप्युदयपुरे मेदपाटदेशाधीश-राणाश्रीकर्णसिंहपार्श्वे गत्वा छन्दःकाव्यादिभिस्तं तोपयित्वा सकलराजलो-कपरिकलितायां पर्षदि लुम्पाकान् वादे विजित्य "तपाः सत्या लुङ्काश्चासत्या" इति श्रीराणाजीसत्कं सहीत्यक्षरद्वयीकुंताङ्कितं स्फुरन्मानमानीय सादडीचतु- 25 ष्पट्टे वाचयित्वा गुरूणां प्रसक्तेस्तपागच्छप्रौढिः प्रौढतमा निर्मिता। ततो

योधपुराधीश्वरराजश्रीगजसिंहजीमान्यपरमप्रधानमंत्रिजयमल्लेन श्रीजालोर-दुर्गे श्रीगुरूनाकार्य बहुतराडम्बरेण प्रतिष्ठात्रयमन्तरान्तरा चतुर्मासकत्रय-कारापणपूर्वकं स्वर्णगिरिशीर्षे चैत्यत्रय च प्रतिष्ठापितम्।

---

१६८४ वर्षे पुनर्जयमल्लमंत्रिणा सहस्त्रशो रूप्यकव्ययेन विजयसिंह-सूरीणां गच्छानुज्ञानन्दिकारिता। ततो मेडतानगरे प्रतिष्ठात्रयं विधाय वि- 5 न्ध्यपुरे चतुर्मासीस्थितान् गुरून् ज्ञात्वा गच्छीयगीतार्थरञ्जितेन राणाश्रीजग-त्सिंहजीकेन श्रीवरकाणके पौपदशम्यां समागतानां लोकानां शुल्कमोचनं तदाघाटरोपपूर्वं ताम्रपत्रेणोत्कीर्य श्रीगुरूणां पुरः प्राभृतीकृतं तत्कदाप्यभूत-पूर्वं सर्वेषामद्भुतकृत् सञ्जातम्। ततो राणपुरादिपु तीर्थयात्रां कृत्वा झाला-श्रीकल्याणजीकेन संमुखमागत्याकारिताः श्रीमेदपाटदेशं पवित्रयन्तः प्रथमं 10 षमणोरग्रामे प्रतिष्ठाद्वयं ततो देवकुलपाटके प्रतिष्टामेकां, ततो नाहीग्रामे अघोटानगरे चेति प्रतिष्ठापंचककरणपूर्वकं श्रीउदयपुरे चतुर्मासीं चक्रुः। तत-स्तत्पारणके गुर्जरत्रां प्रतिचिचिलीपून् दलबादलमहलमध्यस्थितान् श्रीगुरून् श्रीजगतसिंहजीसंज्ञको राणकोऽपि नंतुमागतश्चिरं गुरूमुखचन्द्रे चकोरी-कृतचक्षुस्तद्देशनाऽसमसुधां पीत्वा प्रीतः प्रकामं सत्कारसन्मानादि दत्वा 15 गुरूपुरश्चतुरो जल्पान् प्रपन्नवान्। तथाहि-अद्यप्रभृति पिंछोलके उदयसागरे च तटाके मीनजालानि निपिध्यति १, राज्याभिषेकदिने गुरुवारे जीवामारिः कार्या २, स्वजन्ममासे भाद्रपदाभिधे जीवहिंसा न कार्या ३, मचिंददुर्गे कुम्भलविहारे जीर्णोद्धारः कार्यः ४—इति जल्प-चतुष्टयीग्रहणाभिग्रहवन्तं भूमिकान्तं वीक्ष्य सकला अपि लोका भृशमा- 20 श्चर्यभाजोऽहो! गुरूणां कोऽपि लोकोत्तरो महिमातिशय इत्यादिवर्णनपरा जाताः। किंबहुना श्रीकुमारपालभूपालेन श्रीहेमसूरय इव, श्रीराणाजी-केन श्रीगुरवो बहुमेनिरे—इत्यादयः कियन्तोऽवदाता लिख्यन्ते। यतस्तपसा साक्षाद्धन्यागारा इव, सौभाग्येनाभिनववसुदेवावतारा इव, ध्याननमौनक्रियाकष्टानुष्ठानादिना श्रीभद्रबाहुस्वामिन इव, 25 निर्विकृतिविकृतित्यागेन प्रायो भक्तजनगृहाहारत्यागेन च श्रीमानदेवसूरय

इव श्रीविजयदेवसूरयः सूर्या इव भरतभूमिपद्मिनीं प्रतिबोधयन्तो मालव-मण्डले उज्जयिन्यादौ दक्षिणदेशे च बीजापुर—बर्हानपुरादौ कच्छदेशे च भुजनगरादौ मरुदेशे च जावालपुर—मैदिनीपुर—घंघाणीग्रामादौ जीर्णोद्धारकारापणपूर्वकमनेकशतार्हत्प्रतिमाः प्रतिष्ठयन्तोऽनेकपण्डितपदानि पाठकपदानि स्थापयन्तो दर्शनादेव हीन्दूतुरुष्कादीनामपि चमत्कारं कुर्वन्तो 5 जीवहिंसादिनिषेधनियमांश्च कारयन्तः—

*सिरिविजयसीहसूरिप्पमुहेहिं णेगसाहुवग्गेहिं ।*
*परिकलिया पुहविअले, विहरिंता दिंतु मे भद्दं ॥२॥२२॥*

श्रीविजयसिंहसूरि—प्रभृत्यनेकशतसाधुभिः परिवृताश्चिरं पृथ्व्यां विहरन्तो 'भद्रं दिशन्तु कल्याणं कुर्वन्त्विति गाथार्थः' ॥ 10

तथा स्तम्भतीर्थवासिना सा० देवचन्द्रेण देवीभूय स्वे द्वे भार्ये सं० १६७३ वर्षोत्पन्नोपाधिमतमोचनाय भृशं प्रोक्तमपि तन्मतं न त्यजतस्तदान्यदा तदीयश्राद्धजेमनवारायां जायमानायां तेन देवेन तत्र पाषाणवृष्टिस्तथा कृता यथा भुक्तिं त्यक्त्वा सर्वेषु नष्टेषु तं देवं प्रकटीभूतं ते प्रोचतुस्त्वं कोऽसि कथं चावां भापयसि? इति प्रोक्ते सो- 15 ऽवोचत्—अहं भवद्भर्ता देवचन्द्रो देवीभूतोऽन्यैः सप्तभिर्देवैः सह श्रीविजयदेवसूरीणां सांनिध्यं कुर्वाणोऽस्मीति तेन भवतीभ्यामपि स एव गुरुरङ्गीकार्यो येन मद्भयं न भवतीति प्रोक्ते ते अपि श्रीगुरुभक्ते जाते इत्येकं देवसांनिध्यम् १। तथाऽनयैवरीत्या घोघाख्यबन्दिरवासी सा० सोमजीनामा स्वं कुटुम्बं प्राक् पराङ्मुखमपि देवीभूय प्रतिबोध्य च श्रीविजयदेवसूरिभक्तं कृतवानिति 20 द्वितीयम् २। तथा श्रीविजयदेवसूरिषु मण्डपाचलं प्रतिचलत्सु सेहरषीनामग्रामस्वामिपुत्रः कमाख्यः परमारः। स च पूर्वं भूतार्त्तत्वेन लोकान् मारयन् पित्रा निगडितस्तदा गुरुवासक्षेपेणैव सज्जीभूत इति महदाश्चर्यकृज्जातमिति तृतीयम् ३। तथा राजनगरवासी वणिक्पुत्रः सप्तवर्षाणियावच्च ग्रथिलोऽभूत् तत्पित्रादिभिः श्रीविजयदेवसूरिकरक्षेपः कारितस्तत्कालमेव सज्जो जात-25

श्रेति महदद्भुतमिति चतुर्थम् ४। तथा मेडतावासी पीमसरागोत्रीयः साथा-नाख्यो नवमासा [ याव क्षेत्रपालगृहीतोऽन्यदा श्रीविजयदेवसूरिवासक्षेपेण सज्जोऽजनि, इति सर्वलोकप्रसिद्धमिति पञ्चमम् ५। तथा मरुदेशे गुर्जरदेशे दुर्भिक्षे महति सत्यपि श्रीगुरुषु समागतेषु महत् सुभिक्षं जातमित्यादि श्रीविजयदेवसूरीणां देवसानिध्य बहुशो दृष्टमिति ×॥२॥ 5

इति गाथाद्वयं पूर्वपट्टावल्यां प्रयोज्यम्।

तपगणपतिगुणपद्धति-रेषा गुणविजयवाचकैर्लिलिखे।
गन्धारबन्दिरीय श्रावकसा० मालजीतुष्ट्यै ॥ १ ॥

इति गुर्वावली प्राचीनगुर्वावल्याः पुरोऽनुसन्धीय सुधीभिर्वाचनीया।
॥ श्रीमंगलमस्तु ॥ 10

---

× हस्तलिखितग्रंथे अयं पाठः प्रान्ते लिखितोस्ति, किन्तु अत्र द्वितीयगाथावृत्त्या अन्त एव मुद्रितः सुकरत्वाय ॥

१—श्रीमुनिसुन्दरसूरिशिष्यः श्रीलक्ष्मीभद्रः। ततो लक्ष्मीभद्रीया शाखा निर्गता, तस्यां श्रीहेमविमलसूरिशासनकाले शुभविमला अभूवन्।

तच्छिष्यामरविजयस्तच्छिष्यकमलविजयाः। येषां वाचकौ उ० गुणविजयगणिः उ० कुशलसागरगणिश्च प्रज्ञांशाः १५ एवं शिष्याः ७०॥ तच्छिष्यःकविमुख्यो हेमविजयो विजयप्रशस्तिकाव्यकर्त्ता, द्वितीयःशिष्यो विद्याविजयस्तच्छिष्यः उ० गुणविजयः विजयदेवसूरिसानिध्यात् वि० सं० १६८८ वर्षे ज्ञानपंचम्यां विजयप्रशस्तिकाव्यटीका—विजयदीपिकाकर्त्ता तपागणपतिगुणपद्धतिकर्त्ता चेति ॥

अनुपूर्त्तिः—२

# श्रीतपगच्छपट्टावलीसूत्रवृत्त्यनुसंधानम्

( कर्त्ता—उपाध्यायमेघविजयगणिः )



ऐं श्रीवीतरागाय नमः ।

अथ प्राक्तनपट्टावलीसूत्रान्तसंहितगाथात्रयव्याख्या यथा—

श्रीविजयसेणसूरी, पट्टे गुणसट्ठिमे सुगुणसिट्ठे ।
वाए साहिसहाए, जेण ठविओ स जिणधम्मो ॥१॥२१॥

सिरित्ति । श्रीमज्जगद्गुरुविरुदधारिमहाराजाधिराजपातिसाहिश्रीअक- 5
ब्बरप्रबोधकारिश्रीहीरविजयसूरिपट्टे एकोनषष्ठितमे श्रीविजयसेनसूरिर्भगवान्
जज्ञे । किं विशिष्टः ? सुगुणैः श्रेष्ठः—गुणाः स्वभावजा ज्ञानादयो विभा-
वजा औदार्यादयस्तैरतिशयेन प्रशस्यो वर्णनीयः । येन स्वामिना वादे उप-
स्थिते श्रीसाहिसभायां स जगत्प्रसिद्धो जिनधर्मः अर्हतां शासनं स्थापितं
प्रामाणिकयुक्त्या साधितः । इत्यनेनास्य भगवतः पाण्डित्यातिशयो ध्वन्यते ।10

तस्य च प्रभोर्विक्रमात् सं०१६०४वर्षे नारदपुर्यां वृद्धोपकेशशाखीयघोषा-
गोत्रभृत् सा० कमा तद्भार्या कोडीमा तयोर्गृहे जन्म । सं० १६१३ वर्षे मात्रा
पित्रा च सह श्रीविजयदानसूरिहस्ते श्रीहीरविजयसूरिनिश्रया दीक्षा । सं०
१६२६ पंन्यासपदं, सं० १६२८ वर्षे फाल्गुणसितसप्तम्यां श्रीअहम्मदावाद-
नगरे उपाध्यायपददानपूर्वं आचार्यपदं, सं० १६५२ वर्षे भाद्रसितैकादश्यां 15
तिथौ भट्टारकपदम् । ते च श्रीगुरवो भट्टारकत्वं विंशतिवर्षाणि प्रपाल्य श्री
स्तम्भतीर्थे सं० १६७१ वर्षे ज्येष्ठशुक्लैकादश्यां स्वर्गमलंचक्रुः । एतच्चरितं
विस्तरतो विजयप्रशस्तिकाव्याद्बोध्यम् । किंचिल्लिख्यते:—

श्रीगुरुभिः सं० १६३२ वर्षे चांपानेरदुर्गे समहोत्सवमनेकार्हत्प्रति-
माशतानां प्रतिष्ठा कृता। तथा सूरतिबंदिरे श्रीचिन्तामणिप्रमुखानेकसभ्य-
भट्टसमक्षं श्रीभूषणनामा दिगम्बराचार्यो निर्जितः। तथा 'नमो दुर्वाररागा-
दि-' इत्यस्य श्रीयोगशास्त्राद्यश्लोकस्य सप्तशतान्यर्थाः सूक्तावल्यादिग्रन्थाश्च
कृताः। तथा राजनगरे श्रीखांनखानाख्यनवाबपर्षदि जैनधर्मव्यवस्थापनेन 5
जयश्रीरलंकृता। तत्रैव च श्रीविद्याविजयनाम्ना स्वपदयोग्यं शिष्यं प्रव्राज्य श्री
साहिवदेकारिता प्रतिष्ठा चक्रे। ततो गन्धारबन्दिरे सा० इन्द्रजीकारितां
प्रतिष्ठां श्रीवीरस्य कृत्वा स्तम्भतीर्थे श्रीधनाईकारितां प्रतिष्ठां विधाय श्रीसूरय-
स्तत्रैव चतुर्मासीं चक्रुः।

अत्रान्तरे श्रीहीरविजयसूरिषु विद्यमानेष्वपि एषां श्रीसूरीणां गुणा- 10
तिशयाकर्णनादुत्कण्ठाभाजः पातिसाहिश्रीअकब्बरसम्राजः श्रीसूरीन् लाभपुरे
आकार्य श्रीहीरसूरीश्वरकुशलप्रश्नपूर्वं धर्मवार्तां पप्रच्छुः। तत्र गुरुवचश्चा-
तुर्यरञ्जिता मुख्यशिष्यकृताष्टावधानदर्शनाच्चमत्कृताः साहिपादाः श्रीगुरूणां
बहुगौरवं चक्रुः। तदा केनचिद्भट्टेन 'अमी जैना जगदीश्वरं सूर्यं गंगां च
न मन्यन्ते' इत्युक्ते श्रीसाहिसमक्षं पंचशतभट्टैः सार्धं श्रीगुरुभिर्विवादं 15
प्रारेभे।

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्मेति मीमांसकाः।
अर्हन्नित्यथ जैनशासनरताः कर्त्तेति नैयायिकाः,
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः॥१॥" 20

इति श्रीहनुमाननाटकोक्तेन, तथा

"अधामधामधामेदं, वयमेव स्वचेतसि।
यस्यास्तव्यसने प्राप्ते, त्यजामो भोजनोदके॥२॥"

तथा गङ्गोदकं विना नास्माकं देवप्रतिष्ठा स्यात्। इत्यादि युक्तिभि-
स्तदा भट्टा विजितास्तेन श्रीसाहिपादास्सप्रसादाः श्रीगुरूणां 'काली सरस्वती'

इति बिरुदं दत्तवन्तः । गो १, वृष २, महिष ३, महिषी ४, वध-मृतद्रव्यादान ५, बन्धरोध ६,निषेधरूपपड्जल्पस्फुरन्मानं श्रीसाहिभिर्दत्त्वा लाभपुरे अत्याग्रहेण चतुर्मासिकद्वयं श्रीगुरूणां कारितं, ततः श्रीहीरविजयसूरिभिरबाधावशाद् विजयसेनमुखान्नियामनाभिच्छद्भिराकारिता । श्रीसाहिपादानापृच्छ्य श्रीसूरयश्चतुर्मासिकमध्येऽपि चलन्तः पट्टननगरं प्रापुः । तदा सं० १६५२ 5 वर्षे भाद्रसितएकादश्यां प्रातर्जातं श्रीहीरसूरीश्वरस्वर्गमनं श्रुत्वा तत्रैव तस्थुर्भट्टारकत्वेन सुमुहूर्ते समहोत्सवं श्रीगुरुपट्टमलंचक्रुः । ततः क्रमेण श्रीगुरुभिः स्तम्भतीर्थे प० राजयाश्रिजयाख्यकारितां श्रीचिन्तामणिपार्श्वबिम्बप्रतिष्ठां कृत्वा सं० १६५४ वर्षे अहम्मदावादे भूमध्यान्निर्गतश्रीविजयचिन्तामणिपापार्श्वबिम्बस्य शकन्दरपुरे स्थापनां चक्रे, तथा अहम्मदपुरे सा०भोटाकारिता 10 तथा सा० लहुयाख्यकारिता च प्रतिष्ठां विदधे । समये च लाडोलिग्रामे सूरिमंत्रध्यानं विधाय श्रीस्तम्भतीर्थे श्रीविजयदेवसूरीणां सूरिपदं दत्त्वा पत्तननगरे तेषां गणानुज्ञां नंदिं श्रीगुरवः कृतवन्तः । तत्र च पञ्चसप्तत्यार्द्धगुलार्हत्प्रतिमानां पदप्रतिष्ठाश्च, तदा संघपतिश्रीहेमराजसंघो मरुस्थलीतः श्रीशत्रुंजयतीर्थयात्रार्थं व्रजन् सप्तशताश्ववारकटकद्वादशशतशकटसंयुक्तः श्रीगुरूँस्तत्रा- 15 भ्येत्य वन्दितवान् स्वर्णरूपमुद्राभिरर्चितवांश्च । तद्दर्शनाद्राजनगरवास्तव्य सा० सूराख्यः श्रीगुरूपदेशेन मार्गे प्रतिश्राद्धगृहं महमुन्दिकालभनिकां कुर्वन् श्रीअर्बुदाचलश्रीराणपुरादितीर्थेषु मरुदेशे अनेकनगरसंघेन समं तीर्थयात्रां विधाय निर्विघ्नं प्रत्यागत्य श्रीगुरूनूनाम । तद्वत्सरे श्राद्धैर्लक्षमहमुन्दिकाव्ययश्चक्रे।तदनु श्रीगुरवो राजधान्यपुरे प्रतिष्ठाद्वयं, पुनः स्तभतीर्थे प्रतिष्ठात्रयं, 20 गन्धारबन्दिरे प्रतिष्ठाद्वयं विधाय सुराष्ट्रदेशे विजह्रुः। तत्र चतुर्मासकत्रयं प्रतिष्ठाष्टकं श्रीसिद्धाचलश्रीगिरनारिप्रमुखमहातीर्थयात्रास्तत्रत्यसंघेन सह कृतवन्तः ततो हल्लारदेशे नवानगरे चतुर्मासीं विधाय तद्देशपतिजामराजोऽपि धर्मोपदेशैः श्रीगुरुभिः प्रमोदितः। इत्येवं नानादेशविहारैः भूतलं पवित्रयन्तः श्रीगुरवोऽनेकजीवान्, प्रत्यबुधन्, पञ्चाशज्जिनप्रतीष्ठाँश्चक्रुः । अष्टौ वाचकपदानि 25 सार्धशतं पण्डितपदानि ददुः । द्विसहस्रयतिपरिवृताः "सवाईश्रीहीरविजय

सूरय" इति विरुदं बिभ्राणाः श्रीविजयसेनसूरयः प्रवचनं बहूनि वर्षाणि प्रभावयामासुः। प्रान्ते च विजयदेवसूरीश्वरान् विश्वलनगरे च संघाग्रहात्समनुज्ञाप्य स्वयं श्रीस्तम्भतीर्थे सर्वातिचारलोचनपूर्वं कृतानशनाः समाधिना सं० १६७१ वर्षे ज्येष्ठसितएकादश्यां श्रीगुरवः स्वर्गमलंचक्रुः। तत्राद्यापि बहुवित्तव्ययेन संघकारितं स्तूपं जयतीति गाथार्थः ॥१॥ 5

*तप्पट्टे सूरसमो, साहितमोविजयदेवसूरिगुरू।*

*साहिजहांगीरेणं, महातवास्सित्ती वद्ध···हो······॥२॥*

व्या० 'तत्पट्टे' इति—। तत्पट्टे प्रकाशकत्वात्सूर्यसमः तपस्तेजसा पष्ठितनः श्रीविजयदेवसूरिनाम्ना गुरुर्बभूव। किं विशिष्टः? साहिना—पातिसाहिना—श्रीअकब्बरभूपालजन्मना श्रीजहांगीरेण 'महातपा' इति कृतनामा, 10 इत्यनेनास्य सूरेः तपःप्राधान्यं व्यञ्जितम्। अनेकशः षष्ठाष्टमादिभिः विंशतिस्थानकाद्युत्कृष्टतपश्चरणात् यावज्जीवमुपावासाचाम्लनिर्विकृतिकस्थानभक्तपानरूपनित्यतपःकरणात्तस्य च प्रभोर्विक्रमात्सं० १६३४ वर्षे ईडरदुर्गे वृद्धोपकेश 'ओश्तवाल' गोत्रभृत् सांधिरा तद्भार्यारूपा। तयोर्गृहे जन्म। सं० १६४३ वर्षे जनन्या सह दीक्षा। सं० १६५५ वर्षे पण्डिपदम्। सं० १६५६ 15 वर्षे वैशाखशुक्लषष्ठ्यां उपाध्यायपदपूर्वं आचार्य्यपदं। सं० १६७१ वर्षे भट्टारकपदं सं० १७१३ वर्षे श्रीउनानगरे आषाढदेवशयनैकादश्यां प्रातःकाले ऽष्टमभक्तेन स्वर्गप्राप्तिःतत्र स्तूपं भणशालीरायचंदकारितं, श्रीहीरगुरोर्मुख्यस्तूपपार्श्वे समुद्रतीरेऽस्ति। तस्य भगवतो द्वितीयस्वर्गोत्तरदिशि देवत्वेनावतरणम्। इष्टदेवेन निजाराधकानामुक्तं श्रद्धेयमेव। यतो नाम्ना देवः सर्वत्र 20 नरदेवमान्यः। प्रकृत्यापि देवपट्टादर्शादिषु देवाराधकः देवसांनिध्यवान्। अतस्तदुक्तस्य युक्तत्वात्। अत एव देवशयनैकादश्यां देववेलायां स्वर्गतिरिति।

एतच्चरितं खरतरमतीयश्रीवाचनाचार्यश्रीवल्लभकृत 'विजयदेवमाहात्म्य' काव्यात्तथा मत्कृतमाघसमस्यारूप'देवानन्द'काव्यात् ज्ञेयम्।

समासस्त्वेवं—

श्रीमतामेषां गुरूणां सूरिपदोत्सवे स्तम्भतीर्थेऽनेकदेशग्रामनगरसंघा- 25 ह्वानेन सप्तशतीमुनिपरिवृतान् श्रीविजयसेनसूरीन् बहुधा विज्ञप्य स्ववेश्मनि

द्विधापि विमानश्रियं दधाने सुपर्वशोभाभासुरे प्रचण्डमण्डपाडम्बरेण विचित्र राजवादित्रनिर्घोषैर्नभसि गर्जति सति सर्वसंघभोजनपरिधापनादिभिः श्रीमल्लनामश्रेष्ठिना स्वभ्रातृसोमान्वितेन दशसहस्त्ररूप्यकव्ययेन महती प्रभावना चक्रे सुमुहूर्ते श्रीगुरुभिः सूरिपदं प्रदाय 'श्रीविजयदेवसूरिः' इति नाम संदधे। तदा पुनस्तदुत्सवनिमित्तमेवाष्टसहस्रूप्यकव्ययेन ठक्करकी- 5 काख्येन प्रतिष्ठा कारिता पुनश्चैषां सं० १६५८ वर्षे परीक्षकसहस्त्रवीरेण पञ्चसहस्रमहमून्दिकाव्ययेन कृतोत्सवपत्तने गणानुज्ञानन्दिमहो महान् जज्ञे। तथा श्रीविजयदेवसूरिभिः प्रतिष्ठाद्वयं राजनगरे, प्रतिष्ठाचतुष्टयं पत्तने प्रतिष्ठात्रयं स्तम्भतीर्थे सातिशयमहोत्सवपूर्वं चक्रे।

इलादुर्गे च श्रीकल्याणमल्लराजप्रबोधनात्तत्सभास्थितान्भट्टान् पं० 10 श्रीपद्मसागरगणीनामाज्ञादानेन जापयित्वा राजाग्रहात्तत्र चतुर्मासीं चक्रे। तदा च तत्रत्यगिरिशिरसि प्रभूपदेशात् श्रीऋषभदेवबिम्बं नवीनचैत्योद्धारपूर्वं श्राद्धैर्नटीपद्रे महदाडम्बरेण प्रतिष्ठायां श्रीगुरुभ्य एव प्रतिष्ठाप्य स्थापयामास।

अत्रान्तरे सं० १६७३ वर्षे कतिचिदुपाध्यायैः संभूय कतिचिल्लोकान् स्वायत्तीकृत्य आग्रहबुध्या स्वकीयमतं प्रादुष्कृतमृतन्मतवासिते च स्वकीये 15 भार्ये द्वे सा० देवचन्द्रेण स्तम्भतीर्थवास्तव्येन मृत्वा देवीभूतेन तन्मतश्राद्धजेमनवारायां पाषाणवृष्ट्या संतर्क्य "अहं भवत्योर्भर्त्ता देवचन्द्रः सप्तदशभिर्देवैः श्रीविजयदेवसूरीणां सांनिध्यं कुर्वाणोऽस्मि तद्भवतीभ्यामप्ययमेव पारंपर्यागतः श्रीगुरुः सेव्यः" इत्युक्त्वा श्रीगुरुभक्ते कृते, इत्यद्भुतदेवसांनिध्यादनेकशो लोकाः कुमतानि परितत्यजुः। 20

तथा घोघाख्यवन्दिरवास्तव्य सा० सोमजीनाम्ना स्वकुटुम्बं पूर्वं धर्माद्भ्रष्टं देवीभूय प्रागुक्तवत्प्रबोध्य श्रीगुरोर्भक्तं चक्रे। तदतिशयश्रवणान्महाराजश्रीजहांगीरपातिसाहिः श्रीसूरीन् सबहुमानमाकार्य श्रीमण्डपाचले श्रीगुरुभिः समं धर्मप्रश्नादिवार्तां विदधे। तदा सुधासमानदेशनाश्रवणेन तपस्तेजोमयमूर्तिदर्शनेन भृशं तुष्टः श्रीसाहिराजोऽयं गुरुर्महातपा इति बिरुदं 25 दत्तवान्। तदनु लब्धयशोवादाः श्रीसूरिपादाः श्रीसाहिना स्वयंमनुज्ञापित

स्वकीयदाक्षिणीय महावाद्यवादनादिभिः श्रीचन्द्रपालादिसमृद्धश्राद्धैः सोत्सवं प्रतिपदं सुवर्णमुद्राणां न्युंछनकेषु क्रियमाणेषु भट्टचारणादिमार्गणानां मार्ग यादृच्छिकदानेन सहर्षमुपाश्रये पादावधारणं चक्रुः। किं बहुना, श्रीजिन-प्रवचनप्रासादे कलशारोपणमिदमद्भुतं प्रासीसरत्। ततो गूर्जरत्रां पवित्री-कृत्य सुराष्ट्रदेशे द्वीपबन्दिरे फरंगीपातिसाहिप्रदत्तव्याख्यानानुज्ञापूर्वं चतु- 5 र्मासकद्वयं हल्लारदेशे तद्देशस्वामिभक्त्यनुरोधेन कतिचिद्दिनावस्थानं च कृत्वा स्तम्भतीर्थे चतुर्मासकं तस्थुः।

अत्रान्तरे उपाध्यायपाक्षिकैः सागरपाक्षिकैश्च क्रियमाणं जनव्युद्ग्राहमवेत्य श्रीसावल्यां श्रीगुरवो ध्यानं विदधुः। मासत्रयं ध्यानेनाधिकप्रवृद्ध-धामानः परेषां द्रष्टुमपि दुष्प्रेक्षास्तत्रैव प्रतिष्ठाद्वयं चतुर्मासीं च कृत्वा 'इला' 10 दुर्गे प्रतिष्ठात्रयं संघेन समं तद्देशतीर्थयात्रां कृत्वा क्रमेण 'आरासण' मूल-नायकप्रतिष्ठां चक्रुः।

कालान्तरे च 'इला'दुर्गेऽभ्येत्य सा० 'सहजू'—कृतमहोत्सवेन सं० १६८१ वर्षे वैशाखसितषष्ठयां श्रीविजयसिंहसूरीन् यौवराज्येऽस्थापयत्। तदा तद्देशभूपेन 'रणमल्लचोकी' नामकं गिरिशृङ्गं गुरूपदेशान्नव्यचैत्य- 15 स्थापनाय संघस्य प्रसादीकृतम्।

ततः सीरोह्यां चतुर्मासककरणादनु 'जावालक पुरे' समागत्य श्री-गुरुराजाः 'सादड़ी'—ग्रामे गीतार्थाननुज्ञाप्य लुम्पाकपाक्षिकान् श्रीउदयपुरे राणाश्रीकर्णसिंहसमक्षं सभायां वादपूर्वं निरुत्तरान् कारयामासुः।

ततः श्रीतपागच्छप्रौढिर्महता बभूव। तत्र च श्रीयोधपुराधीश्वरश्री- 20 गजसिंहराजस्य मुख्यमान्यश्रीजयमल्लनाम्ना 'जालोर' दुर्गे प्रतिष्ठात्रयमन्तरा-न्तरा चतुर्मासकत्रयं श्रीगुरूणामत्याग्रहेण कारयित्वा स्वर्णगिरौ चैत्यं स्वका-रितं प्रतिष्ठापयामासे।

सं० १६८४ वर्षे सहस्रशो रूप्यकव्ययेन श्रीविजयसिंहसूरीणां गणानु-ज्ञानन्दिमहोत्सवः कारितः। तदनु 'मेडतानगरे' प्रतिष्ठाद्वयं विधाय 'वन्ध्य- 25 नगरे' चतुर्मासीस्थितान् श्रीगुरून् श्रुत्वा तन्माहात्म्यश्रवणेन तुष्टो राणाश्री-

जगत्सिंहजीनामा श्रीवरकाणकपार्श्वयात्रार्थागतानां लोकानां पोषदशम्यां शुल्कमोचनं चक्रे। पारणायां च त्वरितमेव स्वप्रधानझालाश्रीकल्याणजीकस्य सन्मुखप्रेषणेन श्रीगुरून् दर्शनोत्कण्ठया चाजुहाव।

ततः श्रीगुरुपादाः 'पमणोरग्रामे' प्रतिष्ठाद्वयं, देवकुले चैकप्रतिष्ठां, ततो 'नाहीग्रामे आघाटपुरे' चेति प्रतिष्ठापञ्चकं कृत्वा श्रीउदयपुरे राणाजी 5 ...संघाग्रहाच्चतुर्मासीं विदधुस्तदा गुरूपदेशाद् राणाश्रीजगत्सिंहजीनाम्ना चतुरो जल्पाः प्रपन्नास्तद्यथा—

(१) अद्यप्रभृति पीछोला-उदयसागरनामसरोद्वये मीनग्रहण-जालनिषेधः।

(२) राज्याभिषेकदिने गुरुवारे जीवामारिः कार्या। 10

(३) जन्ममासे भाद्रपदे च जीवहिंसा न कार्या।

(४) मचिन्ददुर्गे श्रीकुम्भाराणाकारितजैनचैत्योद्धारश्च कार्यः।

ततो ऽत्यन्तं श्रीजिनशासनोन्नतिर्जज्ञे।

तदनुक्रमेण गूर्जरधरायां द्वित्रीणि वर्षाणि विहृत्य सुराष्ट्रदेशेन तत्सि-द्धाचलरैवतकादितीर्थयात्रां संघावगमनेन कुर्वाणाः परमगुरवः प्रतिष्ठात्रयं 15 चतुर्मासीद्वयं च कृत्वा हल्लारदेशे नवीननगरे तद्देशेश्वरलाखाभिधानयाम (जाम) प्रतिबोधनेन चतुर्मासीं कृतवन्तः।

अत्रान्तरे दक्षिणप्रदेशे कन्हडदेशे श्रीबीजापुरादिनगरसंघेन श्रीपूज्य-पादानामानयनविज्ञप्तये प्रेषिता महेभ्या श्राद्धी चतुरानाम्नी श्रीगुरूनवन्दे, प्रतिष्ठां चैकां महोत्सवेन कारयामास, वर्षचतुष्टयं यत्र श्रीगुरवो विहरन्ति 20 (सा) तत्र तत्रान्वियाय।

ततो दाक्षिणात्यसंघात्याग्रहात्पुनर्गुर्जरत्रायामभ्येत्य कतिचिद्वर्षाणि तत्र स्थित्वा दक्षिणादेशं विजिहीर्षवः प्रभुपादाः सूरतिबन्दिरे समहोत्सवं समाजग्मुः।

तत्र च सं० १६८७ वत्सरे समुत्पन्नसागरमतवासितैः श्राद्धैः स्वमतस्य 25 श्रीगुरुमुखात्सत्यमिदमिति कथनाय बहुद्रव्यव्ययेन मीरमोजाख्यभूपं स्वव-

शीकृत्य स्वपाक्षिकगीतार्थानाहूय वादः प्रारम्भितः । श्रीगुरुभिरपि सागरमत-
प्ररूपणा उत्सूत्रत्वान्न सत्येति प्रामाणिकपर्षदि राजसमक्षं गीतार्थाननुज्ञाप्य
वादेन सागरपाक्षिकाँस्तिरस्कारयाञ्चक्रिरे । ततो लब्धजयवादाः श्रीगुरुपादाः
सप्रसादाऽवनिनायकेन सम्मानिताः परे च पराभवं प्रापिता इति ।

ततो दक्षिणादेशे विहृतवन्तः । तत्र बीजापुरेऽन्तरां चतुर्मासकचतु- 5
ष्टयीं चक्रुः । तदा श्रीगुरुपादतपोमाहात्म्यप्रसरद्यशःपरिमलानुभवनेन तत्र-
त्यपातिसाहिश्रीईदलसाहिर्दर्शनोत्सुकः श्रीगुरूनाहूय सबहुमानं धर्मस्वरूपं
पप्रच्छ । ततः श्रीगुरूणां वचःपीयूषमासाद्य माद्यन्मना यावद्गुरुस्थितिं
गोवधनिषेधं प्रपन्नवान् जिनप्रवचनमानंदमेदुरं स्फातिमायाति स्म ।

पारणायां च बीजापुराद्यनेकनगरसंघेनान्वीयमानाः श्रीगुरवः पयो- 10
धितटनिकटस्थ श्रीकरहेडपार्श्वनाथ—श्रीकलिकुण्डपार्श्वनाथादितीर्थयात्रां
कुर्वाणास्तत्तद्देशराजप्रभृतीन् लोकान् धर्मे स्थापयांचक्रुः ।

ततश्चाऽवरंगाबादनगरे चतुर्मासकमेकं सोत्सवं विधाय खानदेशे वर्हा-
नपुरे चतुर्मासकद्वयं सान्तरं चक्रुः । ततः प्रचलय्य संघेन सह श्रीअन्तरीक-
पार्श्वश्रीमाणिक्यस्वामितीर्थयात्रां सृजन्तस्तिलिङ्गदेशे गलकुण्डप्रत्यासन्नभाग्य 15
नगरे पातिसाहिश्रीकुतबसाहिना संगत्य तत्सभायां तैलिङ्गभट्टान्वादे विजित्य
जैनधर्मव्यवस्थापनया श्रीपातिसाहिं प्रमोदितवन्तस्तद्वशानुज्ञाश्च । तत्रार्हत्प्र-
तिमानामनेकासां प्रतिष्ठां चक्रुः । एवं च विविधोत्सवैः प्रतिपदं राजप्रबोधा-
दिना सर्वत्र दक्षिणामण्डले विहृत्य प्रतिष्ठासप्तकं चतुर्मासकसप्तकं च कृत्वा
श्रीमज्जिनशासनमयं तन्मण्डलं विदधुः । 20

बीजापुरे सा० देवचंद्रेण प्रथमं प्रतिष्ठा कारिता । तत्र षोडशसहस्र-
रूप्यकव्ययश्चक्रे । द्वितीयस्यां प्रतिष्ठायामष्टसहस्रीरूप्यकव्ययश्च । तत्र पंडित
श्रीवीरविजयानां सं० १७०१ वर्षे पन्यासपदं ददुः । दक्षिणामण्डऽले च
सर्वाणि अशीतिपण्डितपदानि, एकमुपाध्यायपदं च प्रसादितवन्तः । ततः
पुनः संघाग्रहात् गूर्जरत्रां श्रीगुरवः पवित्रीचक्रुः । 25

इतश्च श्रीविजयसिंहसूरयोऽपि गुर्वाज्ञया मरुमेवातमेदपाटादौ विहृत्य राणाश्रीजगत्सिंहजीनामानं प्रबोध्य विशेषतो जीवदयासु देशस्थित जैनतीर्थेषु सप्तदशभेदपूजाकरणोपदेशादिभिश्च दृढीकृत्य श्रीजिनधर्मं प्रभावयन्तः। श्रीमरुदेशे एकां प्रतिष्ठां,मेरुतानगरे आगरावास्तव्यपातिशाहिरत्नव्यवहारिमुख्यसा०हीरानन्दभार्यया श्राविकामनीत्यभिधानवत्या कारितां 5 निर्माय, श्रीकृष्णदुर्गे राठौरवंशीयश्रीरूपसिंहमहाराजस्य महामात्यश्रीरायचन्द्रनाम्नोऽत्याग्रहाच्चतुर्मासकं चक्रुः तत्पारणके सहस्रशो रूप्यकव्ययेन मन्त्रिणा कारितप्रतिष्ठायां बहूनि बिम्बानि जिनानां महतोत्सवेन प्रत्यतिष्ठपन्

तत्रैव आह्लणपुरादागतेन श्रीमहेशदासमन्त्रिश्रीसुगुणाह्वयेन बहुवित्तव्ययपूर्वं सुवर्णमुद्रार्चादिना महोत्सवेन श्रीगुरवो वन्दिताः। ततः क्रमान्मा- 10 ल्यपुरबुन्दीचत (व) लेरपार्श्वप्रमुखतीर्थयात्रां संघेन सह कुर्वन्तः श्रीजयतारणिनगरे चतुर्मासीं विधाय श्रीस्वर्णगिरौ यात्रां कृत्वा क्रमात् श्रीअहम्मदावादनगरे श्रीगुरून्नेमुः।

तैः सहिताः श्रीपरमगुरवः सं० १७०५ वर्षे श्रीइलादुर्गे पत्तनवास्तव्यश्रा०श्रीवन्त्याकारितां प्रतिष्ठां विदधुः। तत्र चतुःषष्टिविबुधेन्द्रान्देवसूरय इव 15 स्थापयामासुः। क्रमेण पत्तनराजनगरादिषु चतुर्मासककरणेन लोकाननुगृह्य स्तंभतीर्थे चतुर्मास्यां तस्थुः।

श्रीविजयसिंहसूरीणां सं० १६४४ वर्षे जन्म, सं० १६५४ व्रतं, सं० १६७२ वाचकपदं, सं० १६८१ सूरिपदं, ते सूरयः परमक्षमापात्रं यावज्जीवं गुर्वाज्ञाराधकाः विवेकाद्यनेकगुणोदधयो ऽष्टाविंशतिवर्षाणि 20 सूरिपदं प्रपाल्य सर्वातीचारालोचनपूर्वमनशनेन सं० १७०८ वर्षे अहम्मदावादपार्श्वस्थनवीनपुरे आषाढसितद्वितीयायां श्रीविजयसिंहसूरयः स्वर्जग्मुः।

तत् श्रवणाद्भृशं दुःखार्ताः परमगुरवोऽपि संसारानित्यतां विमृश्य क्रमाद्विगतशोका बभूवुः।

एषां च श्री गुरूणां तपस्तेजसा देवकृतसान्निध्येन च निरन्तरायतया 25 भूयांसस्तीर्थयात्रासंघाः साडम्बराः श्रीशत्रुञ्जयादितीर्थेषु जीर्णोद्धाराश्च जाताः।

देवसान्निध्यं चैषां स्फुटमेव मण्डपाचलप्रस्थाने कमाख्यपरमारस्य भूतार्त्तस्य लोकानां मारणात्पित्रा निगडितस्य श्रीगुरुवासक्षेपेण सज्जीभवनात्, एवं राजनगरवास्तव्यवणिक्पुत्रोऽपि सप्तवर्षाणि प्राग्ग्रथिलः सोऽपि, तथा मेडतानगरे सा० थानाख्यक्षेत्रपालाधिष्ठितश्च वासक्षेपात्प्रादुर्बभूव ।

एवं चैते भगवन्तः स्वविहारेण गूर्जरत्रासुराष्ट्राहल्लारमरुमेदपाटलाटदक्षिणादेशेषु धर्मबीजानि वपन्तः तद्देशसुभिक्षादिभवनेन स्फुटतरयुगप्रधानातिशयाः शुद्धाशयाश्चिरं भरतभुवि प्रवचनं प्रभावयामासुः । समये च निजायुःशेषं वर्षचतुष्टयं ज्ञात्वा सं० १७१० वर्षे स्वपट्टे श्रीवैशाखसित दशम्यां श्रीविजयप्रभसूरीन् स्थापयामासुः ।

तद्व्यतिकरस्त्वनन्तरमेव वक्ष्यते ।

"सिरिविजयदेवपट्टे, पढमं जाओ गुरू विजयसीहो ।
सग्गगए तम्मि गुरू-पट्टे विजयप्पहो सूरी ॥१॥"इति गाथार्थः

*तत्पट्टंबुजपहकर—सरिसो हरिसेण दरिसणिज्जमुहो ।*
*[तत्पट्टंबुजपहकर—सरिसो सिरिविजयसिंह दिव्वगुरू]*
*इगसट्ठियमोऽणुवमो, विजयप्पहणाम गच्छगुरू ॥२॥२२॥*

व्याख्या—"तप्पट्टंबुज" इति, तस्य श्रीविजयदेवगुरोः पट्टलक्षणे अम्बुजे, प्रकाशकत्वात्प्रभाकरः सूर्यः, तत्सदृशस्तुल्यः । एकोत्तरषष्ठितमः श्रीविजयनामा गच्छगुरुर्भगवान् सूरिर्विजयवान् । किं विशिष्टः ? 'हरिसेण'—हर्षेण दर्शनीयमुखः । इत्यनेनास्य नित्यप्रसन्नता ख्यापिता । तया चास्य भगवतो भाग्यविस्फूर्जितस्य नित्योदयत्वं प्रशान्तत्वं च ध्वन्यते । कुपाक्षिकानां प्रत्यर्थिनां मनसाप्येतस्य गुरोरहितचिन्तकानां स्वत एव नाशात् । घनस्याभ्युदये शरभानामिव । यद्वा हरिः कृष्णः सेनायां यस्य स हरिसेनो देवानामिन्द्रः । 'सेनाचरी भवदिभानवदानवारि—वासेन यस्य जनिता सुरभी रणश्रीः ।' इति नैषधीयकाव्यवचनात् । एवं हरिशब्दस्य तुरगगजाद्यर्थे,हरिसेनाः नृपाः । अहीनामर्थे धरणेन्द्राद्या नागकुमारा ग्राह्याः ।

तेपामपि दर्शनीयं मुखं यस्य स तथा। इत्यत्रार्थे त्रिजगद्वन्द्यत्वं भगवतो दर्शितम्। पुनः किं विशिष्टम्? अनुपमः अतुल्यः। एतेनास्य सूरेः सर्वसूरिभ्यो धैर्यौदार्यगाम्भीर्यसौभाग्यतानिस्तन्द्रतापाण्डित्यक्षमादिगुणानामधिकता ज्ञाप्यते।

अस्य च प्रभोः सं० १६३७ वर्षे माघसितएकादश्यां श्रीकच्छदेशे श्रीमनोहरपुरे वृद्धोपकेशवंशघोपागोत्रभृत् सा० सिवगणभार्याभानुमतीगृहे जन्म। सं० १६८६ वर्षे दीक्षा। सं०१७०१ वर्षे पन्यासपदं। सं०१७१० वर्षे आचार्यपदं। सं १७१३ वर्षे भट्टारकपदं। ते चामी श्रीगुरुपादाः सांप्रतमपि प्रत्यक्ष्यलक्ष्यलक्षप्रभावा नितरां ज्ञानाभ्यासपुस्तकशोधनानेकभव्यजनविबोधनविविधक्रियामग्नमनसो दुस्तपस्तपननिर्जीर्यमाणतमसो गच्छस्य स्मारणवारणादिविधाभिरधिकश्रियं पुष्णंन्तःसत्यसंधाः कल्पान्तेऽप्यविचलवाचः स्वप्रतिपन्नगच्छगीतार्थसंघाभ्युदयदायिनो विजयन्ते।

एतेषां महिमातिमहान्न कार्त्स्न्येन वर्णयितुं शक्यः। तथापि किञ्चिदुच्यते—

एकस्मिन् समये परमगुरुतपागच्छाधिपाः श्रीविजयदेवसूरयः स्वामिनो जिनशासनपट्टपरंपराप्रवाहं प्रवर्धयितुं श्रीसूरिमन्त्रेण ध्यानं चक्रुः। यदस्मदग्रे कः शासनाधिनाथो भविष्यतीति। तदा च प्रवर्धमानतपःपूर्वकजपावधानाकृष्टो मंत्राधिराजाधिष्ठायको देवोऽभ्येत्य नमस्कुर्वन् विज्ञप्तवान् 'स्वामिन्नद्यापि शासनाधीशितुर्न दीक्षापि प्रवृत्ता, भगवतामपि युष्माकं चिरायुष्कता तत्किमनया चिन्तयाधुना? समये च स्वल्पेनापि तपसाहं स्मरणीयः, तदैवागत्य वक्ष्यामि' इत्युक्त्वा सुरस्तिरो बभूव।

कालान्तरे च स्वकीयपट्टे श्रीजिनशासनस्वामिस्थापनावसरं निभाल्य श्रीगन्धपुरे गत्वा श्रीगुरुभिर्ध्यानं प्रारेभे। तदा तत्क्षणादेव मंत्रराजाधिष्ठायको देवः समेत्य निवेदितवान्—"हे स्वामिनः! पण्डितः श्रीवीरविजयनामा सौभाग्यनिधिः विद्यामहोदधिः निरुपधिः चारित्रगुणानामवधिः अजिह्मब्रह्मविधिः विधिरिव सा''भुवनोपकारकः केशव इव पुरुषोत्तमः

नरकान्तकृत् कुमोद्कः शिव इव महाव्रती कामासहनो दक्षजातिस्निग्धः त्रिदशगुरुरिव निर्मलमतिः सुमनसामग्रणीरसौ स्वपट्टे स्थाप्यः, यतोऽस्याग्रे महिमा हि मानाधिको भावी"इत्युक्त्वा देवे तिरोभूते श्रीगुरुभिः गाम्भीर्य-शालिभिः जनप्रत्ययनाय वहिः शकुनगवेषणादावपि देवोक्तानुवादे दृढीभूते सति राजनगरात्त्वरिताभ्यागत सा० रत्नप्रमुखराजनगरीयसंघाग्रहेण श्री- 5 स्तंभतीर्थ-श्रीपत्तन-श्रीसूरतिबन्दिरप्रमुखानेकदेशग्रामनगरसमक्षं श्रीमहा-वीरस्वामिसातिशयमूर्तेः पुरः पत्रिकाविलोकनादानंदित् सकललोके श्रीग-न्धारवन्दिरे विक्रमात्सं० १७१० वर्षे वैशाखसितदशम्यां भृगुवारे पुष्यन-क्षत्रे सुमुहूर्ते रङ्गदुत्तङ्गमण्डपाखण्डशोभादिदृक्षयेवाभ्यागतेषु मुक्तानिकरद-म्भान्नक्षत्रपक्षेपु वाद्यमानविविधातोद्याडम्बरेण गर्जत्यम्बरे दह्यमानासु 10 दुर्जनमनःशकटिकास्विव धूपघटिकासु रसेनापूर्यमाणासु सर्वसङ्घप्रमोदत-टिकास्विव घटिकासु प्रसरद्यशोभिरिव पुष्पप्रकरैराकीर्णे भूवलये श्रीवीर-पट्टाधिपत्यज्ञापनायेव श्रीवीरजिनभवनासन्नदेशे मण्डपेऽभ्यागत्य पं०श्री वीरविजयाः श्रीविजयदेवसूरिभिः स्वपट्टे स्थापयांचक्रिरे। तदा साधुश्री-अखईनाम्नः सुतेन श्रीवर्धमानसंज्ञेन स्वमातृसाहिबदेवीसहितेन प्रतिगृहं 15 सरूप्यमुद्रस्थालिकालम्भनिका चतुर्विधसंघवस्त्रपरिधापनादिना भूरिद्रव्य-व्ययेन महानुत्सवश्चक्रे। श्रीगुरुणा स्वयं चिन्तितम्, इष्टोपदेशेन उ० श्रीक-मलविजयगणिभिर्ज्ञापितमाचार्यपदं प्रदाय "श्रीविजयप्रभसूरिः" इति नाम निर्ममे।

विजयी जगदाराध्यो, यशस्वी च प्रभाववान्। 20
भगवानाद्यवर्णैस्त्व-न्नाम्नाभूद्विजयप्रभः ॥१॥

तदनु श्रीगुरुः श्रीविजयप्रभसूरिणा सह सूरतिबन्दिरे एकं चतुर्मा-सकं विधाय श्रीराजनगरे चतुर्मासीं कृतवान्। तत्पारणायां संघमुख्यसा० सूरापुत्र सा० धनजीनाम्ना श्रीगुरूणां विज्ञाप्य वन्दनकमहोत्सवः प्रारेभे, तत्र च मिलितास्तोकलोकस्थानाय कमनीयप्रकटपटमण्डपैर्माशून्यदर्शनं 25 भूत् इतीवाच्छादिते वियति सुवर्णखचितनिचितश्रुतिपञ्चवर्णचन्द्रोदयप्रभा-

संकरेण रात्रिंदिवातीतविमानोपमानतायामुपनतायां जगति सुसीमताकारिशमैकसाम्राज्यविजयमाने तत्र न तापनकरप्रचार इतीव सहस्रकरकरेषु भूमिमस्पृशत्सु विविधधवलगानश्रवणैकाग्र्येण चित्रतुल्यनिश्चलनरामरोरगैः शोभितेषु पटकुटेषु विश्वविश्रान्तिसश्रान्तिशारदाभ्रपटलेषु इव अत्युच्चमण्डपेषु सिंहासने श्रीविजयप्रभसूरिं निवेश्य भगवान् स्वयं स्वतुल्यताज्ञापनार्थं पुरःस्थित्वा सुमुहूर्ते वन्दनकानि दत्तवान्। जातश्च महान् प्रमोदः। तदनुसर्वसंघसमक्षं श्रीपरमगुरुणाभाणि—"यथाहंतथाऽयम्, सर्वसंघेन सेवनीयः, संसारसागरे प्रवरणमयं कदापि न मोक्तव्यः"।

ततः कृतसंस्कारो मणिरिव, घननिर्मुक्तः सूर्य इव, आहुत्युद्दीपितः पावक इव, भावप्रतिबिम्बनाद्दर्पण इव, प्रोच्चलितः कनककलश इव, तैलापूर्णः प्रदीप इव, कृतालंकारः क्षितिपतिरिव, घननिर्धौतः कनकगिरिरिव, शोधितो ग्रन्थ इव, अधिकं संजातवन्दनकोत्सवपरिकर्मा स श्रीविजयप्रभसूरिर्भूरितेजसा दिदीपे।

तदा सा० श्रीधनजीनाम्नाष्टसहस्रमहमूदिकानां यशोबीजानामिव प्रभावना चक्रे। सर्वसंघपरिधापनिका च। ततश्चैकं चतुर्मासकं अहम्मदपुरे विधाय श्रीपरमगुरुभिः सहैव श्रीविजयप्रभसूरि················ युगादिदेवयात्रां द्वीपवास्तव्यभणसालीयसा०रायचन्द्रप्रमुखसंघेन सह वि································ नालोच्य सुराष्ट्रासंघाग्रहेण श्रीउन्नतपुरमलंचक्रे।

क्रमेण देवशयनैकादश्यां········ विजयप्रभसूरिभिः कृतनिर्यामनाविधयः श्रीविजयदेवसूरयः स्वर्जग्मुः। ततः श्रीवीरनिर्वृते श्रीगौतमस्वामीव श्रीपरमगुरौ स्वर्गतेऽत्यन्तदुःखावेशवशात् श्रीविजयप्रभुरपि कतिचिद्दिनानि विमनस्कतया निन्ये।

तदनु चतुर्विधसंघाग्रहेण संसारस्वभावमनुभाव्य विगतशोकाः सुमुहूर्ते श्रीविजयप्रभसूरिपादाः भट्टारकपदोद्भूतशोभाप्राग्भारभासुराः श्रीगुरुपट्टं विभूषयामासुः। तद्दिन एव शिवपुरीदेशे यतीनां विहारस्य

प्राग्वर्षद्वयं यावन्निषेधस्य मुक्तलता जाता, तद्वर्द्धनिका आगता। तद्वर्षे च श्रीद्वीपवास्तव्यसा० नेमीदासनाम्ना अष्टसहस्रमहमूंदिकाव्ययेन श्रीगुरून् सार्धमादाय श्रीशत्रुञ्जयतीर्थयात्रासंघो महान् चक्रे।

एवं श्रीगुरुभिः सुराष्ट्रायां चतुर्मासकदशकं चक्रे। तत्प्रभावात् सं० १७१५ सं०१७१७सं०१७२०वर्षसत्कास्त्रयोऽपि दुष्कालाः सुराष्ट्रादेशे न 5 प्रसारमापुः। तच्चिह्नं तु जीर्णदुर्गादिषु गूर्जरत्रायां धान्यागमनं प्रतीतमेव। सं०१७२३वर्षे घोघाबन्दिरे श्रीजसूनाम्न्या कारितानेकजिनप्रतिमानां श्रीसूरिभिः प्रतिष्ठा चक्रे।

एषु च श्रीगुरुषु विपक्षभावमावहन्तः केचिद्बालिशाः स्वत एव लोकापवादविडम्बिता अधुना दृश्यन्ते। ततः श्रीअहम्मदाबादनगरसंघा- 10 ग्रहेण श्रीगुरवो गूर्जरत्रायामाजग्मुः। तत्प्रभावाल्लोकानां सुभिक्षेण महान् हर्षो बभूव। इत्यादि परमर्षीणां एषां महिमा प्रकट एव॥ तेन निश्चीयते—एतदाज्ञावर्तित्वमेव उभयथापि शिवाय।

*सिरिविजयरयणसूरि-पमुहेहिं णेगसाहुवग्गेहिं*
*परिकलिआ पुहविअले, सूरिवरा दिन्तु मे भद्दं ॥४॥२४॥* 15

श्रीगूर्जरमरुमालवमेदपाटमेवातकच्छहल्लारसुराष्ट्रादक्षिणादिदेशेषु श्रीगुरुतपस्तेजसा सांप्रतं धर्मकर्माणि निरन्तराय जायन्त इति

सोऽयं वीरपरंपराप्रणयिनीप्राणप्रियः सत्क्रियः।
जीयात् श्रीतपगच्छपः सुरवरैः संसेव्यमानक्रमः।
नाम्ना वीर इति क्षमाधरवरप्रोज्झितनृत्यक्रियः। 20
प्रत्यक्षं विजयप्रभो गणपतिः श्रीवर्धमानप्रभः॥१॥
श्रीवीरतीर्थांतिकलब्धराज्यः, श्रीवर्धमानेन कृतोत्सवश्रीः।
देवाभियुक्तोऽभिधयापि वीरः, श्रीवीरतीर्थे गुरुरेष जीयात्॥२॥
श्रीविजयप्रभसूरे—रुपासकः श्रीकृपादिविजयानाम्।
विदुषां शिष्यो मेघः, संबन्धमिमं लिलेख मुदा॥३॥ 25

इति श्रीपट्टावलिसूत्रोपरिक्षिप्तगाथात्रयविवरणं संपूर्णम्।

अनुपूर्त्तिः—३

# श्रीगुरुमाला

## [ तपागच्छपट्टावलीसूत्रवृत्त्यनुसन्धानम् ]

( कर्त्ता—मुनिवर्यश्रीचारित्रविजयः )



५८—श्रीविजयदानसूरिपट्टे अष्टपंचाशत्तमः श्रीहीरविजयसूरिः ॥

तस्य वि० त्र्यशीत्यधिके पंचदशशत१५८३वर्षे मृगशिर्षशुक्लनवम्यां ९ प्रह्लादनपुरे जन्म, वि० षण्णवत्यधिके १५९६ का० कृ० द्वितीयायां २ सोमे अष्टभिः सह अणहिल्लपुरे दीक्षा, वि० सप्ताधिके षोडशशते १६०७ वर्षे नारदीपुरे पं० पदं, अष्टाधिके १६०८ तत्रैव वाचकपदं, दशाधिके १६१० मृगशुक्लदशम्यां१० शिरोह्यां सूरिपदं, वि० द्विचत्वारिंशदधिके १६४२ फत्तेहपुरे जगद्गुरुपदं×, द्विपंचाशदधिके १६५२ भाद्रसितैकादश्यां ११ ऊन्नायां स्वर्गभूगमनं ॥ येर्दील्लीश्वरपातिसाहिअकबरं मेवाडाधिपतिराणप्रतापसिंहं च प्रतिबोध्य जैनशासनं स्फातिमद्विदधे । सर्वस्मिन्नार्यावर्त्ते अमारिपटहघोषः कारितः ॥ 10

तत्तपः—२० चतुर्थभक्ताचाम्लजनितविंशतिस्थानक-८१ अष्टम-२२५षष्ठ-३६००चतुर्थभक्त-२०००आचाम्ल-२०००निर्विकृतिक-सूरिसं-

---

× श्रुद्धाः सर्वपर्षद्गुरुस्वरा ज्ञात्वेति पृथ्वीपतिः ।
सभ्यानां पुरतः स्वपर्षदि गुणांस्तेषां स्वबोधिताम् ॥
उक्त्वा सर्वपर्षदगुर्हीरविजयाख्यानामदाद् भक्तितः ।
सर्वाक्यैर्विदितं "जगद्गुरु"रिति स्पष्टं महःपूर्वकम् ॥१६७॥
(वि०सं०१६४६ द्वि०भा०शु० ११ मंगलपुरे) —इति, जगद्गुरुकाव्ये ॥

त्राऽऽराधन-गुरु-रत्नत्रयी-द्वादशप्रतिमादिकं ॥ जंबूद्वीपप्रज्ञप्तिवृत्यादि-कर्ता ॥ तच्छिष्यसंततिस्तु-विजय-विमल-सागर-सुन्दर-हर्ष-रत्न-कीर्ति-चंद्र-वल्लभ-हंस-कुशल-रुचि-सौभाग्य-उदय-आनंद-सार एवं शाखासु विभक्ता द्विसहस्रीमीता ॥

ऊन्नतपुरेऽद्यावधि गुरुमंदिरं श्राद्धीलाडकीकृतस्तूपश्च भव्यानानंद-यतिस्म । श्रीसूरिचरित्रं विस्तररुचिना हीरसौभाग्य-जगद्गुरुकाव्य-हीरविजयसूरिरासादिभ्यो ऽवसेयं ॥

५९—*तत्पट्टे एकोनषष्ठितमः श्रीविजयसेनसूरिः* ॥

तस्य वि० चतुरधिके षोडशशत१६०४वर्षे होलिकादिने १५ नारदपुरे जन्म, वि० त्रयोदशाधिके १६१३ शुक्रशुक्लैकादश्यां पितृ-कमर्षि-वंदनान्तरं श्रीविजयदानसूरि हस्तेन सुरतिबंदिरे दीक्षा, वि० षड्विंशत्य-धिके १६२६ फा० शु० दशम्यां स्तंभनतीर्थे पण्डितपदं, वि० अष्टाविंशत्य-धिके १६२८ फा० शु० सप्तम्यां सोमे अहम्मदावादे सूरिपदं, वि० एक-सप्तत्यधिके १६७१ ज्येष्ठकृष्णैकादश्यां स्वर्गः ॥

यस्मैअकबरेण "काली सरस्वती" ति विरुदं षड्जल्पाश्च प्रदत्ताः ।

येन नमोदुर्वाररागादि शतार्थी—मुक्तावल्याद्याःकृताः, दिग्वासो भूषणः पराजितः, चतुर्दशभिर्दिनैः प्रवचनपरीक्षावादिनः पराजिताः, । अपरे ऽप्यहमदावादे निर्जिताः, लाभनगरे ईश्वरकर्तृत्वादिवादे जयो लब्धः ॥

यस्य "सवाई हीरविजयसूरि" रितिविरुदं, अष्टौवाचकाः परःशताः प्रज्ञांशाः द्विसहस्रीमिताः शिष्याश्च ॥ ऋषभदासादिकवयोपि तत्कृपा-कटाक्षप्रफुल्लिता इति । अस्याशेषचरित्रं विजयप्रशस्तिकाव्याद्बोध्यं ।

यस्मिन् स्वर्गेगते तपागच्छे द्वौ संघावभूतां । १—श्रीविजयदेवसूरिसत्को "देवसूरसंघः" अपरः २—श्रीविजयतिलकसूरिसत्क "आनंद-सूरसंघः" इति ॥

*६०—तत्पट्टे षष्ठितमः श्रीविजयदेवसूरिः।*

तस्य वि०चतुस्त्रिंशदधिके षोडशशत१६३४वर्षे पोषशुक्लत्रयोदश्यां रवौ इलादुर्गेजन्म, वि० त्रिचत्वारिंशधिके १६४३ माघे शुक्लदशम्यां राजनगरे जनन्यासमं श्रीहीरविजयसूरिहस्तेन दीक्षा, वि० पंचपंचाशदधिके १६५५ सिकंदरपुरे श्रीशांतिजिनप्रतिष्ठायां पं०पदं, वि० षट्पंचाशदधिके 5 १६५६ वैशाखसितचतुर्थ्यां सोमेप्रबलयोगे स्तंभतीर्थे श्रेष्ठिमल्लसाधुकृतमहामहोत्सवे वाचकपदं च सूरिपदं, वि० त्रयोदशाधिके सप्तदशशतवर्षे-१७१३ आषाढशुक्लैकादश्यां ऊन्नतनगरे स्वःप्राप्तिः॥

यस्मै पातिसाहिजहांगीरेण मण्डपाचलदुर्गे बहुमानेन "जहांगीर-महातपा" विरुदंदत्तं । येनाप्रतिबद्धविहारिणा नैकेषु वादेषु जयपताको- 10 च्छ्रिता. आरासणे (J. B. A. C.) स्वर्णगिरौ च तीर्थे प्रतिष्ठा कृता । जगत्सिंहराणकाय चत्वारो जल्पाःप्रदत्ताः, बहूनि चमत्काराणि संदर्शितानि, नीतनीत वंदु इत्यादिस्वाध्यायाः कृताः॥

तत्समये लुंपकैरपि शास्त्राध्ययनेन बहुधा प्रतिमा स्वीकृता॥

अस्यसूरेर्विशिष्टचरित्रसंबंधो विजयदीपिका—देवानंदाभ्युदय-महा- 15 त्म्यवृत्तिभ्यो ज्ञेयः॥

तत्समये वि० नवाधिके सप्तदशशत१७०९वर्षे गूर्जरदेशे लूंपाक-पूज्यस्य वजरंगर्षेः शिष्याल्लवजीकात् मुखपट्टीबंधा मूर्तिद्वेषिणो ढूंढका जातास्तस्य प्रथमोपसर्गोऽऽपातितइपदनुसारेण मतभेदेन वा "बावीशटोला" इतिनामान्तरं। तन्मूलभेदौ षडष्टकौटिकौ॥ 20

*६१—तत्पट्टे एकषष्ठितमः श्रीविजयसिंहसूरिः॥*

तस्य वि० चतुश्चत्वारिंशदधिके षोडशशतवर्षे १६४४ मेदनीपुरे ओसवंशे पितृनत्थुमल्ल-मातृनायकदेगृहेजन्म, चतुःपंचाशदधिके १६५४ दीक्षा, त्रिसप्तत्यधिके १६७३ वाचकपदं, वि० द्वयशीत्यधिके १६८२ माघ शुक्लषष्ठीसोमे इलादूर्गेसूरिपदं, नवाधिके सप्तदशवर्षे १७०९ सूरौ विद्य- 25 माने एव सुरपदं॥

६२-तत्पट्टे द्विषष्ठितमः श्रीसत्यविजयगणिः ॥

तस्य अशीत्यधिके षोडशशतवर्षे १६८० सपादलक्षदेशे लाडलुग्रामे जन्म, पिता वीरचंद्रो, माता वीरमदेवी, गृहस्थाभिधानं शिवराजः, चतुर्नवत्यधिके १६६४ दीक्षा, एकोनत्रिंशदधिके सप्तदशशतवर्षे१७२६ सोजतग्रामे पं०पदं०, षट्पंचाशदधिके १७५६ वा सप्तपंचाशदधिके ५७ अणहिल्लपुरपत्तने स्वर्गः ॥ 5

तस्य पं० कर्पूरविजयगणि-पंकुशलविजयगणिनौ शिष्यौ ।

तस्मिन्काले तस्मिन्समये कालदोषात् निर्ग्रंथेषु प्रमादबहुलं क्रियाशैथिल्यं प्रवर्तितं । तद्दृष्ट्वा दूनमनसा परमवैरंगिकेण येन घोरतपस्विना भगवता सूरेराज्ञया उ०विनयविजय—उ०यशोविजयादिसहायेन क्रियोद्धारश्चक्रे । "ये क्रियोद्धारं शिश्रियुस्ते साधवो ऽन्ये तु यतय" इति 10 तदा ख्यातिरभूत् । साधवोपि तत आरभ्य यतिभेदचिन्हं काषायिकं वस्त्रं दधुर्या प्रवृत्तिरद्यापि तद्रूपैव । यतयोपि सितवस्त्रधारिणः परिग्रहिणः औषध—मंत्र—तंत्रविद्यया ख्याता दृष्टिपथमवतरन्ति ॥

ततो मुनिभिः सूरिपदग्रहणाय मतांतरेण तु सर्वगच्छनायकपदग्रहणाय विज्ञप्तो य उवाच—"यस्मिन्नधिरूढा गणधरास्तत्र मादृशो लघु- 15 र्नार्हो, माभूत्तस्यपूज्यपदस्याशातना अहं मुनिरेव श्रेयानिति" कृत्वा न स्वीचकार सूरिपदमिति श्रूयते ॥

तस्य विशेषचरित्रं श्रीजिनहर्षनिबन्धात् तन्निर्वाणरासतो ज्ञेयं॥

तत्समये प्रभावकाः—

१—श्रीआनन्दघनः । ये तपागच्छे वैराग्यपूर्णाः निस्पृहिणस्तत्त्ववे- 20 दिनोऽध्यात्मशखेराः उ०यशोविजयकृतबहुमानस्तवा योगिराजोऽभूवन् । तत्कृतिः—चतुर्विंशतिस्तवाः द्विसप्ततिपदसंग्रहश्च ॥

२—उ० श्रीविनयविजयगणिः । यः श्रीहीरविजयसूरि-शिष्यवाचकोत्तमकीर्तिविजयस्य शिष्यः काश्यां उ०यशोविजयानांसहपाठी परमशां-

तरसः नित्यत्रिशतीश्लोककंठग्रशक्तिः वि० अष्टत्रिंशदधिके सप्तदशशत १७३८ वर्षे रान्देरग्रामे स्वर्गभाक् ॥

तत्कृतयः—लोकप्रकाशः ( श्लो० २००००), हेमलघुप्रक्रिया, तद्-बृहद्वृत्तिः, नयकर्णिका, शांतसुधारसभावना, सुखबोधिकानामवृत्तिः, सूर्यपुरचैत्यस्तवः (वि० सं० १६८९) चतुर्विंशतिस्तवनानि, स्तवाद्याः 5 विनयविलासः, चत्तारीअट्ठ०चैत्यस्तवनं,ऋषभविनति, श्रीपालरासश्च + ॥

३—उ०श्रीयशोविजयगणयः ॥ येजगद्गुरुश्रीहीरविजयसूरिशिष्य-उ०कल्याणविजयगणि-शिष्यप्रमयेरत्नमंजूषाशुध्धिकृत्पं०लाभविजयगणि-शिष्यश्रीनयविजयस्य शिष्याः ॥ तेषां विक्रमादनुमानतः पंचाषदधिके षोड-शशतवर्षे १६५० जन्म, अष्टपंचाशदधिके १६५८ दीक्षा, × वि० अष्टाद- 10 शाधिकेसप्तदशशत१७१८वर्षे वाचकपदं, वि० पंचचत्वारिंशदधिके १७४५ दर्भावत्यां स्वर्गः ॥ ÷ "न्यायविशारद न्यायाऽऽचार्य महामहोपाध्याय" इत्यादिनि विरुदानि ॥ =

---

+ तेषां शिष्य परंपरा चैवम्—पं० नयविजयः पं०उत्तमविजयः पं० नरविजयः पं० मेघविजयः पं० केसरविजयः पं० शांतिविजयः पं० विद्याविजयः पं० लक्ष्मीविजयः (यः धोराजीनगरे कालगतः) पं० गुलाबविजयः पं०चारित्रविजयः (यः वि० सं० १९८१ वर्षे पुण्यपत्तने कालं गतः) ।

× अयं वर्षनिर्णयो विचरणार्हः ।

÷ तच्चरणशिलालेखः—संवत्१७४५ शा०१६१० मार्गशीर्षशुक्लैकादशी । श्रीहीरविजयसूरीश्वर शिष्यपं०श्रीकल्याणविजयगणि शिष्यपं०लाभविजयगणि शिष्य-पं०जीतविजयगणि सोदरा सतीर्थ्याः पं० श्रीनयविजयगणि शिष्यश्रीजशविजय-गणिनां पादुका कारापिता ॥

= पूर्वं न्यायविशारदत्वविरुदं काश्यां प्रदत्तं बुधै-
न्यायाचार्यपदं ततः कृतशतग्रन्थस्य यस्यार्पितम् ॥
—इति प्रतिमाशतकप्रशस्तौ १७ श्लोकार्धे, ॥

ते च द्विघस्यामेव देवसीप्रतिक्रमणस्मृतिकारकाः नीत्यंपंचशतश्लोककरणबुद्धयः संवेगरंगिणः बालब्रह्मचारिणः पंडितदीयमानोद्भिन्नयौवना सुरूपाकन्यायाःपरित्यागिणः परमतार्किकाः प्रतिक्रमणादेशे एव भगवतीस्वाध्याय—समकितसडसट्ठीस्वाध्यायरचयितारः अनौष्ठ्यवादाः अष्टाधिकशत न्यायग्रंथप्रणेतारः द्विलक्षप्रमाणग्रंथब्रह्माणो युगैकस्तंभाः सिध्धैकारमंत्राः अवधानपटवः प्रकाण्डशासनरागाः श्रुतकेवलिप्रतीतिकारणम् ॥ 5

तेषांगुरुभ्राता श्रीपद्मविजयो गणिः ।

शिष्याः श्रीहेमविजयाद्याः यन्नामानि स्पष्टतया नोपलभ्यंते+॥

तत्कृताः संस्कृतग्रन्थाः—अध्यात्मोपदेशः, अध्यात्मसारः, अध्यात्मोपनिषद्, अध्यात्ममतखण्डनवृत्ती, अध्यात्ममतपरीक्षावृत्ती, अलंकारचूड़ामणिवृत्तिः, अष्टसहस्रीवृत्तिः, अनेकान्तव्यवस्था, आत्मख्यातिः, आदिजिनस्तवनम्, आराधकविराधकचतुर्भङ्गी, उपदेशरहस्यवृत्ती, ऐन्द्रस्तुतिवृत्ती, कर्मप्रकृत्तिवृत्तिः, काव्यप्रकाशवृत्तिः, कूपदृष्टान्तः, गुरुतंत्वनिर्णयवृत्ती, छन्दश्चूड़ामणिवृत्तिः, जैनतर्कपरिभाषा, तत्वार्थवृत्तिः, तत्वलोकवृत्तिः, तत्वविवेकः, त्रिसूत्र्यालोकविधिः, द्रव्यालोकः, द्वादशारनयचक्रोध्धारवृत्तिः, द्वात्रिंशद्द्वात्रिंशिकावृत्ती, देवधर्मपरीक्षा, धर्मपरीक्षावृत्ती, धर्मसंग्रहटिप्पनकम् ,नयप्रदीपः, नयोपदेशवृत्ती न्यायखण्डनखण्डखाद्यम्, 10 15

---



न्यायालोकः पञ्चनिर्ग्रन्थि, पातञ्जलयोगसूत्रचतुर्थपादवृत्तिः, परमज्योतिः-पञ्चविंशतिका, परमात्मविंशतिका, प्रतिमास्थापनन्यायः, प्रतिमाशतक-वृत्ती, मङ्गलवादः, मार्गशुध्धी, यतिदिनचर्या, यतिलक्षणसमुच्चयः, योगविंशिकावृत्तिः, विचारबिन्दुः, विधिवादः, वीरस्तववृत्ती, वेदान्तनिर्णयः, वैराग्यकल्पलता, समाचारीप्रकरणवृत्ती, स्याद्वादमञ्जूपा, सिद्धान्ततर्कपरिष्कारः, सिध्धान्तमञ्जरीवृत्तिः, श्रीगोडीपार्श्वनाथस्तोत्रम्, श्रीशंखेश्वरपार्श्वनाथस्तोत्रम्, श्रीसमीपार्श्वनाथस्तोत्रम्, स्तोत्रसंग्रहः, शठप्रकरणम्, पोडपप्रकरणवृत्तिः, ज्ञानबिन्दुः, ज्ञानार्णवः, ज्ञानसारवृत्ती, रहस्यपदांकितग्रन्थानामष्टोतरशतम् × ॥

गौर्जरीकृतिः—अध्यात्ममतपरीक्षास्तवक, आनन्दघनस्तुतिअष्टक, उपदेशमाला, जशविलास, जम्बुस्वामीरास, तत्वार्थसूत्रस्तबक, द्रव्यगुणपर्यायरासतथास्तबक, दिग्पटचोराशीबोल, पञ्चपरमेष्ठिगीता, ब्रह्मगीता, लोकनालितथास्तवक (रचनावि० सं० १६६५) विचारबिन्दुतथास्तवक, श्रीपालरासअन्त्यभाग, समाधिशतक, समताशातक, समुद्रवहाणसंवाद, सम्यकत्वचोपाइ साधुवंदनमाला, ज्ञानसारस्तवक इत्यादिग्रन्थाः ॥
कुमतिखंडनस्तवन, त्रणचोवीशी, वीशी, दशमतस्तवन, नयगर्भितशान्तिजिनस्तवन, निश्चयव्यवहारगर्भितस्तवन, पार्श्वनाथस्तवनद्विक, महावीरस्तवन, मौनएकादशीस्तवन, वीरहुंडीस्तवन श्रीसीमन्धरचैत्यवंदन, श्रीसीमन्धरविनति, श्रीसीमन्धरस्वामिवृहत्स्तवन आवश्यकस्तवन। इत्यादिस्तवाः

अंगउपांगस्वाध्याय (वि० सं० १७४४) अढारपापस्थानकस्वाध्याय, अमृतवेली, आठदृष्टि, आत्मप्रवोध, उपशमश्रेणि, चताडपडतानीस्वाध्याय चारआहार, ज्ञानक्रिया, पांचमहाव्रतभावना, पांचकुगुरु, प्रतिक्रमणगर्भहेतु, प्रतिमास्थापन, यतिधर्मबत्रिशी, स्थापनाकल्प, सुगुरु, संयमश्रेणी, समकितनासडसठवोलनीस्वाध्याय, हरियाली, हितशिक्षा इत्यादि स्वाध्यायाः॥

---

× नयरहस्यम् भापारहस्यम् स्याद्वादरहस्यम् प्रमारहस्यम् इत्यादि। यैः वि०सं०१६६९वर्षे डुंगरपुरे धातुसंग्रहो लिखितः, लोकनालिकापि कृता ॥

४—उ० श्रीमानविजयगणिः ॥ यः श्रीहीरविजयसूरि—पट्टधरश्रीविजयसेनसूरि—पट्टधरश्रीविजयतिलकसूरि—पट्टधरविजयानन्दसूरि–पट्टधरविजयराजसूरिराज्यवर्ती श्रीविजयानन्दसूरि—शिष्यश्रीशांतिविजयस्य शिष्यो धर्मसंग्रहकर्ता (वि०सं०१७३१) ॥

५—श्रीआनन्दविमलसूरीणां शिष्यपं०हर्षविमलस्य प्रमेयरत्नमंजूषाशुध्धिकर्तुः संततावनुक्रमेण जयवि० कीर्तिवि० विनयवि० श्रीधीरविमलगणिनां शिष्यः श्रीज्ञानविमलसूरिः॥ यो साधुवंदनरास कल्याणमन्दिरस्तवन–चैत्यपरिपाटी–चैत्यवंदन–स्तव–स्वाध्याय–स्तूति–शतशोसिद्धाचलस्तवन–आनन्दघनचतुर्विंशतिस्तवक–तीर्थमाला (वि० १७५५) श्रीपालचरित्रादिकं रचयांचकार। यः क्वचित्स्वग्रन्थे उ० यशोविजयं स्मरतिस्म ॥

६—उ०उदयरत्नः । ख्यातमहाकविः बहूनां गूर्जरग्रंथानां प्रणेता × ॥

७—उ० मेघविजयगणिः । लूम्पकमते मेघजीऋषेर्मेघराजनाम्ना प्रशिष्यः, अत्र वि० एकोनपष्ठ्यधिके पोडशशते १६५६वर्षे श्रीविजयसेनसूरिहस्तदीक्षितः, श्रीहीरविजयसूरि–शिष्यउ०कनकविजय–शिष्यशीलविजय—शिष्यसिध्धिविजय—शिष्यकृपाविजयानां शिष्यः ॥

---

× तत्पट्टपरंपरा—५८ श्रीआनंदविमलसूरिः, ५६ श्रीविजयदानसूरिः, ६० श्रीराजविजयसूरिः, ६१ श्रीरत्नविजयसूरिः, ६२ श्रीहीररत्नसूरिः, ६३ श्रीजयरत्नसूरिः, ६४ भावरत्नसूरिः, ६५ दानरत्नसूरिः, ६६ कीर्तिरत्नसूरिः, ६७ मुक्तिरत्नसूरिः, ६८ पुण्योदयरत्नसूरिः ६६ अमृतरत्नसूरिः, ७० चंद्रोदयरत्नसूरिः, ७१ सुमतिरत्नसूरिः (खेडा)

तत्गुरुपरंपरा—६२ श्रीहीररत्नसूरिः, लब्धिरत्नः मेघरत्नः शिवरत्नः सिद्धिरत्नः उ० उदयरत्नः उत्तमरत्नः जिनरत्नः क्षमारत्नः राजरत्नः अनोपरत्नः तेजरत्नः उ० गुणरत्नः (विद्यमानः)

—(जैनयुग पु० ३ अं० ११–१२, वि० सं० १६८४)

( ६० ) श्रीराजविजयसूरिशिष्यो देवविमलगणिः पाण्डवचरित्रकृत् ॥

तत्कृतयस्तु—देवानन्दाभ्युदयकाव्यं, श्रीशांतिनाथचरित्रं (काव्यं) विजयदेवमहात्म्यवृत्तिः, दिग्विजयः (श्रीविजयप्रभसूरिचरित्रं); चंद्रप्रभाव्याकरणं (श्रीसिद्धहेमव्याकरणप्रक्रिया वि० सं०१७५७ आगरा) मेघदूतसमस्या, युक्तिप्रबोधः (दि० तेरहपन्थखंडनं), सप्तसन्धानमहाकाव्यम्, त्रिषष्टिशलाकापुरुषचरित्रम्, मेघमहोदयः, ब्रह्मबोधः, मातृकाप्रसादः, श्रीपार्श्वनाथनाममाला, उदयदीपिका, त्रिणि पत्राणि च ÷ ॥ 5

८—श्रीदेवचन्द्रो गणिः—श्रीखतरगच्छे जिनचंद्रसूरि-शिष्योपाध्याय पुण्यप्रधान-शिष्यउ०सुमतिगणि-शिष्यउ०राजसागर-शिष्यज्ञानधर्मजी-शिष्य दीपचंद्रगणिस्तशिष्यश्रीदेवचंद्रोगणिः परमशांतः द्रव्यानुयोगनिष्णातः सर्वगच्छसमानहृदयः× ॥ 10

येन वाचकवर्यश्रीयशोविजयेभ्योध्यात्मरसो पीतश्च येन श्रीजिनविजय-उत्तमविजयाः पाठिताः ॥ तच्छिष्याः श्रीमतिरत्नाद्याः ॥

तत्कृतयः—ध्यानदीपिका, आगमसार, नयचक्र, ज्ञानमञ्जरीटीका, चतुर्विंशतिः विंशिका, पूजा स्तवाः प्रभंजनाप्रमुखस्वाध्यायाः इत्यादि ॥

यैः पं०क्षमाकल्याणकगणिना सह क्रियोध्धारश्चक्रे ततः खरतरगच्छे ऽपि काषायिकवस्त्रप्रवृत्तिरिति श्रूयते, 15

---




× तद्ग्रन्थरचनाकालस्तु वि० सं० १७९२ तः १८०४ पर्यन्त इति तस्मादयं श्रीउत्तमविजयतत्कालीन इति सयुक्त्युक्तं ॥

६३–*तत्पट्टे त्रिषष्ठीतमः श्रीकपुरविजयगणिः* ॥

तस्य पत्तनसमीपस्थवागरोडग्रामे प्राग्वटवंशे भीमजीगृहे वीराकुक्षौ जन्म, कानजीअभिधानं, वि० विंशत्यधिके सप्तदशशत१७२०वर्षे जननी-जनकयोर्देवलोकगतयोः दीक्षा, विजयप्रभसूरिहस्ते प्रज्ञांशपदं वि० पादोनाष्टादशशत १७७५ वर्षे श्रावणबहुलचतुर्दश्यां १४ स्वर्गः। 5

६४–*तत्पट्टे चतुष्षष्ठितमः श्रीक्षमाविजयगणिः* ॥

तस्य अर्बुदाचलसन्निधौ पोयंद्राग्रामे कलोशाह-वनादेगृहे ओसवंशे चामुण्डागोत्रे वि० द्वाविंशत्यधिके सप्तदशशते१७२२वर्षे खीमचंद्रनाम्ना जन्म, चतुश्चत्वारिंशदधिके १७४४ वर्षे ज्येष्ठसितत्रयोदशीदिने गुरु भ्रातृकवि पं० श्रीवृध्धिविजयहस्तेन अहमदावादे दीक्षा, विजयक्षमासूरि- 10 हस्तेन पं० पदं, षडशीत्यधिके १७८६ आश्विनमासे स्वः प्रयाणं ॥ येन सप्तशतजिनप्रतिमाः प्रतिष्ठापिताः ॥

तत्कृतयः—पार्श्वनाथजिनस्तवनचैत्यवंदनस्तुत्याद्याः

तस्य शिष्यश्रीयशोविजयः श्रीतत्त्वार्थसूत्रस्तवकस्तवादिकर्ता।

६५–*तत्पट्टे पंचषष्ठितमः पं०श्रीजिनविजयगणिः* ॥ 15

तस्य श्रीमालज्ञातिः पिताधर्मदासो मातालाडकुमारी विक्रमात् द्विपं-चाशदधिके सप्तदशशत१७५२वर्षे अहमदावादे जन्म,जन्मनाम खुशालचंद्रः

वि० सप्तत्यधिके १७७० वर्षे कार्तिककृष्णषष्ठ्यां अहमदावादे दीक्षा, वि० एकाशीत्यधिके १७८१ वर्षे गुरूणां हस्तेन जम्बूसरे प्रज्ञांशपदं, द्वितीय एव वर्षे गच्छानुज्ञादानं, एकोनाष्टादशशत१७९९वर्षे 20 श्रावणशुक्लदशम्यां पादराग्रामे स्वर्गगमनं ॥

तत्गौर्जरीकृतिः—ज्ञानपंचमीस्तवः एकादशीस्तवः जिनचतुर्विंशिका कपूरविजयगणिस्वाध्यायो गुरुस्वाध्यायश्च ( सं० १७७१ पट्टने )

६६—*तत्पट्टे षड्षष्ठितमः श्रीउत्तमविजयगणिः* ॥

तस्य श्रेष्ठिलालचन्द्रगृहे माणेकदेवीकुक्षौ अहमदावादे वि० षष्ठ्यधिके सप्तदशशतवर्षे १७६० जन्म, पूञ्जासाहनाम, षण्णवत्यधिके १७९६ वैशाखकृ०षष्ठ्यां ६ दीक्षा, सप्तविंशत्यधिके अष्टादशशतवर्षे १८२७ माघशुक्लाष्टम्यां ८ राजनगरे स्वर्गगमनं, यो वहुश्रुतः सातत्येन गूर्जरसौराष्ट्रमहाराष्ट्रादिषु विजहार प्रान्ते नेत्रव्याधिना राजनगरेऽवस्थानमकरोत् यः चतुरधिकाऽष्टादशशत१८०४वर्षे सं०कचरा सं०रूपचंद्रयोः संघेन सूरतिवन्दिरात् जलमार्गेण सिध्धाचलयात्रां चकार तत्समये तत्र उ०सुमतिविजयः पं०जोगविमलः पं०देवचंद्रगणिः विधिपक्षगच्छे उदयसागरसूरिः प्रमुखा मिलिताः ।

तत्कृतिः—श्रीजिनविजयनिर्वाणरासः, अष्टप्रकारीपूजा ॥

तत्समयेष्टादशाधिकेष्टादशशतवर्षे १८१८ रघुनाथशिष्यात् ढुंढकमतात् भीखमजीतः जिनप्रतिमाद्वेषी अनुकंपाविरोधि मुखपट्टवन्धस्तेरापंथो निर्गतः ।

६७—*तत्पट्टे सप्तषष्ठितमः पं०श्रीपद्मविजयगणिः* ॥

तस्य वि०द्विनवत्यधिकसप्तदशशत१७९२वर्षे राजनगरे श्रीमालीवणिजो गणेशस्य गृहे झमकुकुक्षितो जन्म, जन्माभिधा पानाचंदइति, वि० पंचाधिके अष्टादशशत१८०५वर्षे वसन्तपंचम्यां ५ राजनगरे दीक्षा, वि०दशाधिके १८१० राजधन्यपुरे भ०विजयधर्मसूरिहस्तेन, पंन्यासपदं, वि०द्विषष्ठ्यधिके १८६२ चैत्रशुक्लचतुर्थ्यां राजनगरे स्वर्गः ॥

यःसकलशास्त्रपारावारपारीणः पंचपंचाशत्सहस्रग्रंथनिर्माता "परमद्रह" इतिख्यातकीर्तिः वर्हानपुरे ढुंढकैः सह लब्धजयवादः जिनप्रतिष्ठादिक्रियापरायणः क्रियारुचिः परमसम्वेगिः कविशेखरः सततविहारी ॥

तत्कृतयो— रास-श्रीउत्तमविजयगणिरास-पूजा-देववंदन-चैत्यवंदन-स्तव-स्तुत्याद्याः ॥

६८—*तत्पट्टे अष्टषष्ठितमः पं०श्रीरूपविजयगणिः* ॥

येन विंशतिस्थानकागमज्ञानकल्याणकपूजाःश्रीगुरुरासश्च विरचिताः ॥ तच्छिष्याः–पं०कीर्तिविजयगणि उद्योतवि० अमीविजयाश्च ॥

तत्समये तच्छिष्यमहाकविमोहनविजयो भक्तिरसप्रधानः "लट-काला" इतिख्यातः ॥ तथा पं० जिवविजयः कर्मग्रन्थस्तबककर्ता + ॥

तथा पं०श्रीक्षमाविजयगणि-शिष्यशुभविजयगणि-शिष्याः पं०श्री-धीरविजयः पं० श्रीवीरविजयः, पं० श्रीअमरविजयः पर्यूषणास्तूतिकारक इति प्रमुखाः ॥ 5

तेषु पं०श्रीवीरविजयः सौष्टवतायुततलस्पर्शिकवित्वः विविधभंगी-कलितपूजास्वाध्यायस्तुतिवेलीरासरूपलघुग्रंथनिर्माता मोतिशाहटुँक-हठी-सिंहवाडीजिनालये प्रतिष्ठाकर्ता श्रेष्ठिप्रेमाभाइकस्य संघेन सिध्धगिरियात्रा कारकः ( वि० सं० १६०५ )

यस्य अहमदावादे औदिच्यविप्रकुले जगदीश्वरपत्नीवीजकोरकुक्षि- 10 तो विक्रमादेकोनत्रिंशत्यधिकेऽष्टादशशतवर्षे १८२९ विजयादशम्यां जन्म, जन्मनोऽभिधानं केशवराम इति, गंगाभगिनी,पत्नीरलीयात,अष्टादशमे वर्षे विवाहः अष्टचत्वारिंशदधिके१८४८वर्षे स्तंभनतीर्थसन्निधौ ग्रामे दीक्षा,ततः पन्यासपदं, सप्तपष्ठ्यधिके १८६७ वर्षे फाल्गुनशुक्लद्वितियायां स्वगुरो-र्देवलोके स्थितिः, वि० दृशाधिके एकोनविंशतिशत१९१०वर्षे स्वर्गगमनम् ॥15

श्रीतपोगच्छे आनन्दसूरिशाखायां क्रमेण श्रीविजयतिलकसूरि-श्री-हीरसूरिशिष्यविजयानन्दसूरि-श्रीविजयराजसूरि-श्रीविजयमानसूरि ÷ — श्रीविजयऋद्धिसूरि श्रीविजयसौभाग्यसूरयो भूवन् ॥ तच्छिष्यो विजय-लक्ष्मीसूरिः उपदेशप्रासादस्तंभनिर्माणसूत्रधारः (वि० सं० १८४३)-भाषायां विंशतिस्थानकपूजा (वि० सं० १८४५)-चैत्यवन्दन-ज्ञानवंदनादीनां कर्ता,॥ 20 यल्लघुगुरुबंधुः प्रेमविजयः ॥

---

+ श्रीविजयसिंहसूरि शिष्यपं०गजविजयगणि शिष्यपं०हितविजय शिष्य पं०ज्ञानविजय शिष्यपं०जीवविजय इति (कर्मग्रन्थ वि०सं० १८०३)

÷ अयं श्रीधर्मसंग्रह-अष्टमदस्वाध्यायकर्ता उ०मानविजय एव संभवति

६९--*तत्पट्टे एकोनसप्ततितमः पं० श्रीकीर्तिविजयगणिः* ॥

तस्य वि०एकषष्ठ्यधिकाष्टादशतवर्षे दीक्षा, बहवःशिष्याः ॥
तच्छिष्यो जीवविजयः सकलतीर्थ-शांतिजिनस्तवकर्ता ॥

७०—*तत्पट्टे सप्ततितमःश्रीपं०कस्तूरविजयगणिः* ॥

तस्य वि०सप्तत्रिंशदधिके अष्टादशशतवर्षे १८३७ प्रह्लादनपुरे जन्म, 5
वि० सप्तत्यधिके १८७० दीक्षा ॥

७१—*तत्पट्टे एकसप्ततितमः पं०श्रीमणिविजयगणिः* ॥

तस्य वीरमगामसन्निधौ अघारग्रामे द्विपञ्चाशदधिके अष्टादशशत-
वर्षे १८५२ जन्म, पिता जीवणदास, माता गुलाबबाइ, स्वनाम मोतिचंद,
त्रयो भ्रातरः पानु भगिनी, सप्तसप्तत्यधिके१८७७पालीग्रामे दीक्षा, पंचत्रिं- 10
शदधिके एकोनविंशतिशतवर्षे १९३५ आश्विनधवलाष्टम्यां ८ अहमदावा-
दनगरे स्वर्गः ॥ यो महातपस्वी, अप्रतिबध्धविहारी प्रशान्तमूर्तिश्च ॥

तत्सप्तर्पयः शिष्याः-श्रीअमृतविजयः श्रीपद्मविजयः पं०श्रीबुध्धिवि-
जयगणिः पं०श्रीगुलाबविजयगणिः. श्रीहीरविजयः पं० श्रीशुभविजयः
पं०श्रीसिद्धिविजयः ॥ प्रज्ञांशगुलाबविजयसिध्धिविजयौ सांप्रतं शासनम- 15
लंकुरुतः स्म ॥

७२—*तत्पट्टे द्विसप्ततितमः श्रीबुध्धिविजयगणिः* ॥

तस्य सुस्वप्नसुचितस्य वि०पष्ठ्यधिकअष्टादशतवर्षे १८६३ पंचनदे
जन्म, अष्टाशीत्यधिकेवर्षे१८८८अजिम्हब्रह्मचर्येणैवादौ ढुंढकमते बुटेरा-
यजीनाम्ना व्रतस्वीकारः वि०त्र्यधिके एकोनविंशतिशते१९०३वर्षे शुद्धधर्म- 20
श्रध्धानं,वि०द्वादशाधिके १९१२ राजनगरे शिष्याभ्यां समं संवेगदीक्षा,अष्ट-
त्रिंशदधिके १९३८ फाल्गुनावास्यां राजनगरे स्वरातिः, भगुभाइपुत्रदल-
पतभाइ इत्यनेन निर्वाणोत्सवः कृतः ।

यः मुखपट्टीं विना ढुंढकसाधुवेषेणैव अष्टौ वर्षाणि शुद्धधर्मदेशकः,
सिध्धगिरियात्राकृत्, पंचनदे संवेगमतद्योतकेषु प्रथमः, मुहपत्तिचर्चा- 25
ग्रंथकृत्, परात्मतत्वानंदी, महान्योगी, निःस्पृहः ।

तच्छिष्याष्टकम्—

(१) प्रथमः श्रीमुक्तिविजयो गणिः गणनायकः चारित्रधर्मयुगप्रवर्तकः।

(२) द्वितीयो मुनिश्रीवृद्धिचंद्रः। यस्य पंचनदे रामनगरे नवत्यधिके अष्टादशशतवर्षे ओसवंशे जन्म, अष्टाधिके एकोनविंशतिशते वर्षे ढुंढकमते दीक्षा, द्वादशाधिके संवेगदीक्षा, एकोनपंचाशदधिके भावनगरे स्वर्गः॥ 5

तच्छिष्याः—श्रीकेवलविजयः पं०श्रीगंभिरविजयः पं०चतुरविजयः श्रीहेमविजयः श्रीविजयधर्मसूरिः श्रीविजयनेमिसूरिः श्रीप्रेमविजयः श्रीकर्पूरविजयः उत्तमविजयः।

(३) तृतियो मुनिनीतिविजयः। यच्छिष्याः— 10

पं०विनयविजयः, श्रीभक्तिविजयः, शान्तात्मा सिध्धिविजयः, तिलकविजयः, मोतिविजयः, प्रतापविजयः, सुंदरविजयः, दर्शनविजयः, चारित्रविजयः।

(४) चतुर्थः पं०आनंदविजयः।

यच्छिष्याः—श्रीहर्षविजयः, मानविजयः कुमुदविजयः। 15

(५) पंचमो मोतिविजयः। यच्छिष्यौ चंद्रविजय-गुणविजयौ।

(६) षष्ठः श्रीविजयानंदसूरिः पंचापे जैनधर्मस्थापकः न्यायांभोनिधिरितिख्यातिमान् दयानंदसरस्वतीविजेता॥ यस्य पंचनदे लहेराग्रामे गणेशरामगृहे रूपाकुक्षौ वि०त्रिनवत्यधिके अष्टादशशतवर्षे१८९३जन्म, वि० एकादशाधिके एकोनविंशतिशतवर्षे १९११मृगशिर्षपंचम्यां ढुंढकमतदीक्षा, 20 एकत्रिंशदधिके १९३१ राजनगरे जैनदीक्षा, त्रिचत्वारिंशदधिके १९४३ वर्षे कार्तिककृष्णपंचम्यां सूरिपदं, द्विपंचाशदधिके १९५२ प्रथमज्येष्ठशुक्लसप्तमीनिशायां गुजरानवालायां स्वर्गमनं॥

यत्कृतग्रंथास्तत्वनिर्णयप्रासाद-जैनतत्वादर्श-अज्ञानतिमिरभास्कर-सम्यक्त्वशल्योद्धार-जैनमतवृक्ष-चिकागोप्रश्नोत्तर-जैनप्रश्नोत्तरसंग्रह— 25 पूजा-चतुर्विंशतिस्तव-स्वाध्यायाः।

यच्छिष्याः श्रीमन्तो लक्ष्मी० संतोष० रंग० रत्न० चारित्र० कुशल० प्रमाद० उद्योत० सुमति० वाचकवीर० प्रवर्तककांति० जय० शांति० अमरविजयाः ।

( ७ ) सप्तमः तपस्वी श्रीखांतिविजयः पंचनदीयः पष्टभक्ततपोऽभिग्रही उग्रतपस्वी । यच्छिष्याः—मणिक० मोहन० खुशाल० प्रतापविजयाः । 5

( ८ ) अष्टमः श्रीदानविजयः ।

तत्समये श्रीआनंदविमलसूरितो विमलशाखायां क्रमशः ऋध्धि विमल–कीर्तिविमल–वीरविमल–महोदयविमल–प्रमोदविमल–मणिविमल–उद्योतविमल–दानविमलस्य शिष्यः प्रज्ञांशदयाविमलः ॥ तथा हीरविजयसूरितः क्रमेण विजयशाखायां ऋध्धि० चारित्र० रंग० तेज० 10 यशवंत० कुशल० पं० जीत० श्री० जय० पं० हर्ष० चंद्रविजयाः तत् शिष्यः प्रज्ञांशहेतविजयः ॥ तथा ततएव सागरशाखायां शिष्यक्रमेण उ० सहजसागर–उ० जयसागर–पं० जीतसागर–मानसागर–मयगलसागर–पद्मसागर–स्वरूपसागर–ज्ञानसागर–मयासागराः तत्शिष्यस्तपस्वीनेमसागरः ॥ श्रीरूपवि० शिष्यअमीवि० शिष्यसौभाग्यवि० शिष्यपं रत्नविजयः ॥ 15 खरतरगच्छेऽपि आप्रह्लादनपुरात् तपागच्छाचारः सौम्यमूर्तिः श्रीमोहनलालजीमुनिः ॥

तत्समये श्रीनेमसागरशिष्यश्रीरविसागरशिष्यात् शांतिसागरात्–स्वेच्छावृत्तिर्व्रतविधितपोविरोधो मनस्तोषधर्मः "शांतिसागरमतोऽनिर्गतः । तथान्यदर्शनेषु स्वामिनारायण, ब्रह्मसमाज, कुका, अहमदशाह- 20 फीरका, आर्य्यसमाज एते मता निर्गताः इति ॥

*७३—त्रिसप्ततितमः श्रीमुक्तिविजयगणिः ॥*

तस्य वि षड्शीत्यधिके अष्टादशशतवर्षे १८८६ पंचनदे स्यालकोटे जन्म, द्व्यधिके एकोनविंशतिशतवर्षे १९०२ श्रीबुटेरायजीहस्तेन ढुंढकमतदीक्षा, द्वितीयवर्षे संवेगधर्माभिमुखता, द्वादशाधिके १९१२ गुरुणा सह 25

संवेगदीक्षा, त्रयोविंशत्यधिके १६२३ पं०दयाविमलगणिहस्तेन गणिपदं; पंचचत्वारिंशदधिके १६४५ मृगशिर्षकृष्णपष्ठ्यां६ भावनगरे स्वर्गः, दादावाडीउद्याने अग्निसंस्कारः, मोतिशाटूकमध्ये सिध्धगिरौ मूर्तिप्रतिष्ठापनं।

यः संवेगमुर्तिः शिष्यलाभोदयः चारित्रधर्मैकदानी एकछत्रमुनिसाम्राज्याधिपतिः मुहपत्तिचर्चावादविजेता शांतिसागरमतनिरसनः युग- 5 प्रधानः। यदुपदेशात् श्रेष्ठिप्रेमाभाइ भगिनीउजमबाइ इत्यनया स्वावासः पौषधशालायै दत्तः द्वौसिद्धगिरिसंघौ निर्गतौ (वि०१६२१ वि०सं० १६४४) द्वितीयसंघेन सह विहारे घटः स्फुटितो वहूनां निषेधेऽपि विहारः कृतः पादलिप्तेपुरे चतुर्मासकमपिजातं, ततो भावनगरे स्वर्गः युगप्रधाने गते शासने कलिः समागतः॥ श्रीवृद्धिचन्द्रप्रमुखा गुरुभातरस्तद्धस्तदीक्षिता एव येन 10 नैके शिष्या गुरुवन्धुभ्यो दत्ताः॥ येन महेशानपुरे संवेगिमुनिप्रचारः कृतः। पादलिप्तेपुरे श्रीदर्शनविजयं प्रेष्य यतिरुद्धं मुनिव्याख्यानमुद्घाटितं यद्द्यापि निरंतरायं समस्ति।

सूरिपदप्रदानतत्परं प्रेमाभाइश्रेष्ठिनं येनोक्तं—श्रेष्ठिन्ः अतःपरं पुनरेतन्नवाच्यं यदि श्रीसत्यविजयगणिरपि प्रतिष्ठापदमानहानिभिया सूरिपदं 15 न ललौ तदाहंकथं तद्योग्यः? मम गणिपदमपि महत् पालनेनैव प्राप्तपदव्याः फलाप्तिरन्यथातु सूरयोऽपि नरकगामिनः सूत्रे कथिता इति।

तस्य शिष्याः—(१) प्रशस्तागमाभ्यासिदेवविजयः (२) गुणविजयः (३) हंसविजयः (४) गुलाबविजयः (५) श्रीविजयकमलसूरिः (६)थोभणविजयः (७) महावैयाकरणन्यायविशारदो दानविजय इति। 20

तेषु श्रीमद्गुलावविजयस्य शिष्याः–मणिविजयः मंगलविजयः, नरेन्द्रविजयः प्रधानविजयः।

*७४–तत्पट्टे चतुःसप्ततितमः श्रीविजयकमलसूरिः॥*

तस्य वि० त्रयोदशाधिके एकोनविंशतिशते वर्षे १६१३ चैत्रशुक्लद्वितीयायां २ पादलिप्तेपुरे कोरडीयागोत्रे श्रेष्ठिदेवचन्द्रगृहे मेघबाईकुक्षौ- 25

जन्म, कल्याणचन्द्र नाम, चत्वारो भ्रातरः,मृतयोर्मातृपित्रोः षड्त्रिंशदधिके १९३६ माधवशुक्लाष्टम्यां राजनगरे दीक्षा, द्वितीयवर्षे१९३७कार्तिकासित-द्वादश्यां उपस्थापना, वि०सप्तचत्वारिंशदधिके १९४७ ज्येष्ठशुक्लत्रयोदश्यां १३पं०श्रीहेतविजयहस्तेन लींवड़ीनगरे गणिपदं पन्यासपदं,वि०त्रिसप्तत्यधिके १९७३ माघ शुक्लपष्ठयां ६ रविवारे राजनगरे पं० श्रीदेवविजय- 5 गणिः, पं०श्रीमोहनविजयगणिः, प्रवर्तिनिआर्यागुलाबश्रीजी, साध्वी-प्रेमश्रीजी, नगरश्रेष्ठिकस्तूरभाइ, श्रेष्ठिविमलभाइ, श्रेष्ठिमातागंगामा, श्रेष्ठि-नीमुक्ताबाइ, प्रमुखसमग्रसंघेनप्रदत्तं सूरिपदं ॥

तच्छिष्याः—(१) श्रीभावविजयः, (२) पं श्रीकेसरविजययो गणिः, (३) श्रीविनयविजयो गुरुः,× (४) पं० देवविजयगणिः, (५) पं० मोहन- 10 विजयगणिः व्याख्याता (६) श्रीमोतिविजयः॥ तथा हेतवि०रामवि० नयवि०ज्ञानविजया निरपत्या एव स्वर्गभाजः ॥

यः करुणावत्सलः शांतप्रतिमो महातपस्वी आबालब्रह्मचारी सूरि-शेखरो भगवान् चतुर्विधसंघेन सह समागत्य संप्रति पादलिप्तपुरमलंक-रोति, जीवेभ्यो दुःखौषधिरूपं धर्मलाभं ददन् जगत्कल्याणं वांच्छति स्म ॥15

सम्प्रति धुरिणः—श्रीविजयनेमसूरिः श्रीविजयकमलसूरिः श्रीविजय-धर्मसूरिः श्रीबुद्धिसागरसूरिः पं०सिद्धिविजयगणिः परमकारुणिकोमुनि-सिद्धिविजयः पं०चतुरविजयगणिः परमक्रियारुचिः श्रीजीतविजयः आग-मनिष्णातः पं० आणंदसागरगणिः पं०हरखमुनिश्च

---

× श्रीविनयविजयस्थविराणां वि०सं० १९१९ वै०शु० ६ जामनगरे जन्म, वि०सं०१९५५ जामनगरे लघुदीक्षा, वि० सं०१९५७ महेसानपुरे पोषकृष्ण११ छेदोप-स्थापना, १९८३ का० कृ० ६ जामनगरे स्थविरपदं, वि०सं० १९८८ पोष कृ० ६, जामनगरे स्वर्गः ॥

॥ प्रशस्तिः ॥

जीयासुर्न्यायविभवाः यशोविजयवाचकः
गुरुकुलहिते दक्षाः स्मृतिप्रत्यक्षमूर्तयः १

वर्द्धमानात्समारभ्य गुरुमाला गुणैर्वरा
वर्द्धमानासहस्राब्दं धीसूच्या सूत्रिता नवा २ 5

श्रीमद्विजयकमल–सूरीणामाज्ञयाकृता
गुप्तिध्यानजिनेवर्षे पञ्चम्यां श्रावणे सिते ३

तेषां शिष्यविनय—विजयस्यान्तेवासिना
चारित्रविजयेनैषा पादलिप्ते पुरे लघुः ४

इति श्रीमती गुरुमालापट्टावली समाप्ता 10

धर्मचारित्रशिष्येण, अमरचंद्रसूनुना
पं०त्रिभूवनदासेन, शुध्धिकृत्य च चित्रिता १

---

# श्रीमन्महावीरपट्टपरम्परा

( कर्त्ता—श्रीदेवविमलगणिः )



अथो पुरासन्भरते वृषाङ्कमुखाश्चतुर्विंशतितीर्थनाथाः ।
बाह्यान्यबाह्यानि तमांसि हन्तुं कृतद्विरूपा इव भानुमन्तः ॥१॥
इक्ष्वाकुवंशाम्बुधिशीतभासां द्वाविंशतिस्तीर्थकृतां बभूव ।
यया तमःपङ्कमपास्य पन्थाः प्राकाशि सिद्धेः शरदेव विश्वे ॥२॥
बभूवतुर्द्वौ भुवनप्रदीपौ जिनौ यदूनां पुनरन्ववाये । 5
अरिष्टनेमिर्मुनिसुव्रतश्च स्फूर्जद्भुजाविन्द्रियवेश्मनीव ॥३॥
सिद्धार्थभूकान्तसुतो जिनानामपश्चिमोऽजायत पश्चिमोऽपि ।
शशी व्यभात्पङ्किलपङ्कजास्यकादम्बवद्यस्य यशःसुधाब्धौ ॥४॥
बाल्येपि हेमाद्रिरकम्पि येन प्रभञ्जनेनेव निकेतकेतुः ।
श्रीद्वादशाङ्गी च यतः प्रवृत्ता गुरोर्गिरीणामिव जह्नुकन्या ॥५॥ 10
एकादशासन्गणधारिधुर्याः श्रीइन्द्रभूतिप्रमुखा अमुष्य ।
आर्योपयामे पुनराप्तमूर्तिं रुद्राः स्मरं हन्तुमिवेहमानाः ॥६॥
बभूव मुख्यो वसुभूतिसूनुस्तेषां गणीनामिह गौतमाह्वः ।
यो वक्रभावं न बभार पृथ्वीसुतोऽपि नो विष्णुपदावलम्बी ॥७॥
यत्पाणिपद्मः सपुनर्भवोऽपि दत्ते नतानामपुनर्भवं यत् । 15
शिष्यीकृता येन भवं विहाय शिवं श्रयन्ते च तदत्र चित्रम् ॥८॥
सूर्यस्य रश्मीनवलम्ब्य वज्रावलम्बरश्मीनिव यः शयाभ्याम् ।
नन्तुं जिनानार्षभिक्लृप्तमूर्तीनष्टापदोर्वीधरमारुरोह ॥ ९ ॥

९—तपः कृशाङ्गास्तं शैलमारोढुं न वयं क्षमाः ।
चढिष्यति कथं प्रौढदेहोऽयं गजराजवत् ॥

कथं लभेतास्य तुलां सुरद्रुर्यस्य नामापि पिपर्ति कामान् ।
तपस्विनोऽप्यभ्यवहारयन्यो द्विधामृतास्वादजुषः पुपोष ॥१०॥
आसीत्सुधर्मा गणभृत्सु तेषु श्रीवर्धमानप्रभुपट्टधुर्यः ।
विहाय विश्वे सुरभीतनूजं कः स्तात्परो धुर्यपदावलम्बी ॥११॥
यः पञ्चमोऽभूद् गणपुंगवानां किं पञ्चमीं स्वेन गतिं यियासुः । 5
यत्रोक्तिभिस्तीर्थकृतां दिदीपे शुक्तिव्रजे वारिमुचामिवाद्भिः ॥१२॥
सरस्वतीशालिलसज्जिनश्री-रगाधमध्यो रसभासमानः ।
सिद्धांत आस्ते यदुपज्ञमुद्यदभङ्गभङ्गः सरितामिवेशः ॥१३॥
गणीन्दुना पट्टरमा गणीन्दुः पट्टश्रिया च व्यतिभासते स्म ।
निशा निशेशेन निशा निशेश इवापि शंभोः परिचारिचेताः ॥१४॥ 10
यशःश्रियाधःकृतकुन्दकम्बु-र्जम्बूकुमारोऽजनि तस्य पट्टे ।
लवोरपि स्वस्य यतोऽभिभूतिं पश्यन्ह्रियादृश्य इव स्मरोऽभूत् ॥१५॥
उज्झांचकारैष महेभ्यकन्या मदेन्दिरामूर्तिमतीरिवाष्टौ ।
नवाधिकां यो नवतिं हिरण्यकोटीर्नु चेटीरिव दोपराजाम् ॥१६॥
वशंवदीभूतजगत्त्रयस्य न पुस्फुरेऽस्मिन्कमनस्य शक्त्या । 15
हविर्भुजो भस्मितकाननस्य विस्फूर्ज्यते किं महसाम्बुराशौ ॥१७॥

---

पश्यत्सु तेषु मार्तण्डकरानालम्ब्य गौतमः ।
गणभृन्निजलब्ध्यैवाऽष्टापदोर्ध्वं ययौ ध्रुवन् ॥ इति ऋषिमंडलवृत्तौ ॥

सूर्यस्यांशून् समाश्रित्य, तेषामुत्पश्यतामपि ।
स गरुत्मानिवोड्डीय, ययौ मंक्षु गिरेः शिरः॥ इतिवृन्दारवृत्तौ, रविकिरणावलम्बनम् ।

तथा—" भयवं गोयमो जंङ्घाचारणलद्धिपलूतापुडगंस्मिनिस्साए उठ्ठुंप्पयइ ज़ाव ते पलायन्ति" । इत्यावश्यकद्वाविंशतिसहस्र्यां । मलयगिरिवृत्तावपि अयमेव पाठः । लूतातन्त्ववलम्बनमिति पाठद्वयमपिशास्त्रानुसारि ॥ इति स्वोपज्ञायां तद्व्या-ख्यायाम् ॥

पश्यन्तु वैदुष्यममुष्य जम्बू-प्रभोर्वपुर्भर्त्सितमत्स्यकेतोः ।
विश्वं वृषस्यन्त्यपि पांशुलेव वशीकृता येन शिवस्मतास्या ॥१८॥
अलंचकार प्रभवप्रभुस्तत्पट्टश्रियं पुण्ड्र इवेन्दुवक्त्राम् ।
स्तेनोपि सार्थेश इवाङ्गिनो यः श्रेयः श्रियं प्रापयदत्र चित्रम् ॥१९॥
किं वर्ण्यते वर्ण्यगुणस्य चौर्य-चातुर्यमस्य प्रभवस्य भर्तुः । 5
अहार्यमप्येष मनोऽभिधानमपाहरद्यत्रिदिवेन्दिरायाः ॥२०॥
शय्यंभवोऽभूपयदस्य पट्टं सिंहासनं पित्र्यमिवावनीन्द्रः ।
कलिन्दिका मौक्तिकमालिकेव यत्कण्ठपीठे विलुठत्यकुण्ठा ॥२१॥
यूपादधस्तः प्रतिमां जिनेन्दो-र्वाचा स वाचंयमपुङ्गवस्य ।
दृक्संज्ञयेव स्वगुरोः किरीटी नाराचगङ्गां प्रकटीचकार ॥२२॥ 10
वगाह्य शास्त्रं मनकाह्वसूनोः कृते कृतश्रीदशकालिकं यः ।
हरिः सुधामुद्धृतवान्सुपर्ववर्गस्य निर्मथ्य यथाम्बुनाथम् ॥२३॥
संपूरयन्कीर्तिनभोनदीभिर्दिशो यशोभद्र गणाधिराजः ।
व्यभूपयत्पट्टममुष्य भूभृदधित्यकां दस्युरिव द्विपानाम् ॥२४॥
एतद्यशःक्षीरधिनीरपूरैः संपूरितायां परितस्त्रिलोक्याम् । 15
अबुध्यमानोऽम्बुनिधिं स्वशय्यां पद्मेशयो ऽभूदिव पद्मनाभः ॥२५॥
संभूतिपूर्वो विजयो गुरुस्तत्पट्टं श्रिया पल्लवयांचकार ।
कदम्बजम्बूकुटजावनीजकुंजं नभोम्भोद इवाम्बुवृष्ट्या ॥२६॥
संहर्परोषात्स्वजिघांसुमेतत्प्रतापमार्तण्डमवेत्यसाक्षात् ।
युयुत्सया हैहयवत्सहस्रं सहस्रभासेव करा ध्रियन्ते ॥२७॥ 20
स तत्सतीर्थ्योऽजनि भद्रबाहुः सूरिः समग्रागमपारदृश्वा ।
दशाश्रुतस्कन्धत उद्दधार वज्राकराद्वज्रमिवात्र कल्पम् ॥२८॥
उपप्लवो मन्त्रमयोपसर्गहरस्तवेनावधि येन संघात् ।
जनुष्मतो जांगुलिकेन जाग्रद्गरस्य वेगः किल जांगुलीभिः ॥२९॥
यत्कीर्तिगंगां प्रसृतां त्रिलोक्यामालोक्य किं पण्मुखतां दधानः । 25
जगद्भ्रमीभिर्जननीं दिदृक्षुर्गंगासुतोऽध्यास्त मयूरपृष्ठम् ॥३०॥

श्रीस्थूलभद्रेण निजान्ववायस्रोतस्विनीनायककौस्तुभेन ।
विश्वत्रयी तद्यशसेव शोभामलम्भि तत्पट्टपयोधिपुत्री ॥३१॥
प्रवालमुक्तामणिमञ्जिमश्रीचित्राप्सरःस्वर्द्धिरदाश्वदृश्यम् ।
कोशागृहं प्रावृषि यः सिषेवे हरिर्घनच्छायमिवाम्बुराशिम् ॥३२॥
पण्यांगनायाः किलकिञ्चितानि न लेभिरे यस्य हृदि प्रवेशम् । 5
धनुर्भृतः सानुमतः शिलायां पृषत्कपंक्तेः प्रहृतानि यद्वत् ॥३३॥
प्राङ्निर्जितश्रीरथनेमिमुख्यवीरावलीनामिव वैरशुद्धेः ।
विधित्सयाध्यास्य तदाश्रयं यो ध्यानासिनाऽनङ्गनृपं जघान ॥३४॥
चक्रीव रत्नानि चतुर्दशापि पूर्वाणि धत्ते स्म पतिर्यतीनाम् ।
यत्र क्वचिद्देवकुले स्वजामीर्श्चित्रीयितुं सत्य इवास सिंहः ॥३५॥ 10
येनोपदेशाच्छलतः स्वपाणिसंज्ञाज्ञया स्तम्भतलाददर्शि ।
निधिः स्वनिक्षिप्त इव प्रवासिसुहृद्गृहिण्याः सदने समेत्य ॥३६॥
पट्टेऽथ तस्यार्यमहागिरिश्चापरः क्रमादार्यसुहस्तिसूरिः ।
बभूवतुर्धर्मधुरं दधानौ रथे यथासारथिकस्य रथ्यौ ॥३७॥
मरुद्गृहादार्यसुहस्तिमूर्तिर्भूमौ मरुद्वृक्ष इवोत्ततार । 15
कृपार्णवेन द्रमकोऽपि येन त्रिखण्डभूमीप्रभुतामलम्भि ॥३८॥
भूसुभ्रुवो भर्तृतया प्रगल्भभूषाविशेषानिव शातकौम्भान् ।
सपादलक्षानिह संप्रतिर्यो निर्मापयामास महाविहारान् ॥३९॥
यः सम्प्रतिक्षोणिपतिः सपादकोटीर्नु पेटीः स्वयशोनिधीनाम् ।
स्याद्वादिनां सद्मसु शिल्पिसंघैरचीकरत्पारगतीयमूर्तीः ॥४०॥ 20
नक्तं नलिन्यादि(सु)गुल्मनामविमानमार्गः प्रभुणा च येन ।
स्नेहप्रियेणेव महेभ्यसूनोरदर्श्यवन्तीसुकुमालनाम्नः ॥ ४१ ॥

---

३१—निजः स्वकीयो'यो'नागरनामा ब्राह्मणवंशः स 'एव'स्रोतस्विनीनायकः नदीपतिः समुद्रः तत्र कौस्तुभेन । इतिद्वाख्यायां ।

३५—यक्षा, यक्षदिन्ना, भूता, भूतदिन्ना, सेना, वेणा, रेणा । क्वचिद्रेणापि-नामद्वंद्वम् । एतन्नाम्नीः स्वजामीः सप्तापि निजभगिनी इति तद्वृत्तौ ॥

स्थाने स्ववप्तुस्त्रिदिवं गतस्य व्यधादवन्तीसुकुमालसूनुः ।
नाम्ना महाकाल इतीह पुण्यपानीयशालामिव सार्वशालाम् ॥४२॥
श्रीमत्सुहस्तिव्रतिवासवस्य श्रीसुस्थितः सुप्रतिबद्धसूरिः ।
पदं विनेयौ नयतः स्वलक्ष्मीं क्रमं मुरारेरिव पुष्पदन्तौ ॥ ४३ ॥
प्रीतिं सृजन्ती पुरुषोत्तमानां दुग्धाम्बुराशेरिव पद्मवासा । 5
हृदा जिनं बिभ्रत आविरासीत्तत्सूरियुग्मादिह "कौटिकाख्या" ॥४४॥
श्रीइन्द्रदिन्नव्रतिसार्वभौमस्तत्पट्टलक्ष्मीतिलकं बभूव ।
निशुम्भ्यते दांभिकता स्म येन कलिन्दकन्येव हलायुधेन ॥४५॥
पक्षद्वयं भिन्नतमोभरेण पित्रोः पवित्रीक्रियते स्म येन ।
कुबेरदिग्दक्षिणयोः पदव्योर्द्वन्द्वं प्रियेणेव पयोजिनीनाम् ॥४६॥ 10
श्रीदिन्नसूरिर्गुणभूरिरस्मात्सप्तर्षिभूरंगिरसो यथासीत् ।
येनानुरागोऽवधि कालनेमिः कल्लोलिनी वल्लभशायिनेव ॥४७॥
पञ्चाशुगान्यः समितीर्विधाय बभञ्ज पञ्चाशुगपञ्चबाणीम् ।
शरेण केनापि न चेत्कदाचित्कस्मान्न तं स प्रभवेद्वपुष्मान् ॥४८॥
सूरीश्वरः सीहगिरिः क्रमेण व्यभासयत्तत्प्रभुपट्टलक्ष्मीम् । 15
जिनस्य पादं शिरसा स्पृशन्तीं निकाय्यराजीमिव केतुवारः ॥४९॥
विन्ध्यं निपीताब्धिरिव व्रतीन्द्रो य एधमानं निषिषेध कोपम् ।
यद्वाक्तरङ्गैश्च जिताभ्रसिंधुस्त्रपातिरेकादिव निमग्नगासीत् ॥५०॥
तमोभरोर्वीधरभेदवज्रिवज्रोऽथ वज्रप्रभुरेतदीयम् ।
पट्टं परां प्रापयति स्म भूषां माणिक्यकोटीर इवोत्तमांगम् ॥५१॥ 20
आशैशवादेव जहौ निजाम्बां वेलामिव क्षीरनिधेः सुधांशुः ।
अध्यैष्ट यः पालनके शयानोऽप्येकादशाङ्गीः स्मृतपूर्वजन्मा ॥५२॥
यः पुष्पदः पल्लवलीलयेव वैराग्यलक्ष्म्यालमकारिबाल्ये ।
प्राग्जन्ममित्रात्त्रिदशान्नभोगविद्यां पुनर्वैक्रिलब्धिमापत् ॥५३॥
दुर्भिक्षवर्षेषु सुभिक्षभूमीं संघं कृपानीरनिधेर्निनीषोः । 25
वज्रप्रभोर्यस्य पटः पटीयान्विमानवद्व्योमनि दीप्यतेस्म ॥५४॥

सहैव देहेन समग्रसंघं नयत्यसौ सिद्धिपुरीमिवैनम् ।
जनैरिति व्योमनि तर्क्यमाणः पटः प्रभोर्बौद्धपुरीमवाप ॥५५।
ध्यातुर्वरं श्री श्रुतदेवतेव यस्यादरात्पद्ममदत्त पद्मा ।
वनात्पितुर्मित्रहुताशनस्याग्रहाच्च यो विंशतिलक्षपुष्पान् ॥५६॥
मूर्तैरिव स्वस्य गुणैः प्रफुल्लत्पुष्पोत्करैः पर्युषणाक्षणेषु । 5
समुन्नतिं शाम्भवशासनस्य तस्यां सुनन्दातनयस्ततान ॥५७॥
प्राबोधयद्बौद्धपुरीप्रभुं यः समं समग्रैरपि पौरलोकैः ।
साकं शकुन्तैरिव पङ्कजानां कुञ्जं समुद्यद्गगनाध्वनीनः ॥५८॥
अपास्यति स्माढ्यसुतां सरागां यो रुक्मिणीं काञ्चनकोटिभिश्च ।
क्रोडन्मृगेन्द्रां स्मितसल्लकीभिर्निकुञ्जराजीमिव कुञ्जरेन्द्रः ॥५९॥ 10
श्रीवज्रसेनोऽथ तदीयपट्टं व्यभासयत्प्रीणितजन्तुजातः ।
स्फुरन्मदोद्भेद इव द्विपेन्द्रकपोलमानन्दितचञ्चरीकः ॥६०॥
दुर्भिक्षके पायसमेत्य लक्षपकं महेभ्यस्य गृहे प्रभुर्यः ।
दिने द्वितीये कुलदेवतेव न्यवेदयद्भाविसुकालमस्य ॥ ६१ ॥

---

५६—पर्युषणदिनेषु अष्टान्हिकामहोत्सवं कर्तुमिच्छोः जैनद्विष्टतया बौधनृपतिवारितमालिमण्डलात् पुष्पमात्रमप्यनाप्नुवतः संघस्य कृते कुसुमानयनार्थं प्रस्थितस्य पद्मह्रदे यातस्य यस्य वज्रस्वामिनः पद्मा लक्ष्मी आदरात् भक्तिभरतः स्तवनवंदनपूर्वकम् पद्मं स्वह्रदात् सहस्रपत्रमादाय भगवत्पूजार्थं प्रयान्ती श्रीस्तत्सहस्रदलकमलं पद्मार्थोपगतायास्मै अदत्त दत्तवती ॥ + + ( विंशतिलक्षपुष्पाणि ) मित्रतिर्यक्जृम्भकदेवविनिर्मितिविमाने स्थापितवानित्यर्थः ॥ इतितद्व्याख्यायाम् ॥

५६—कोडीसए धणसंचियस्स गुणस्स भरियाए कन्नाए । इत्युपदेशमालावचनात् ॥

किंभूताम् ? सरागां स्वसौधसंन्निधिस्थितसाध्वीगीयमानयद्गुणग्रामाऽऽकर्णनोद्भूतानुरागवशंवदतया 'अस्मिन् भवे मम प्राणनाथो वज्रस्वाम्येव नान्यः' इतिकृतनिश्चयतया सस्नेहां जहौ । इति तद्व्याख्यायाम् ।

६१—यः वज्रसेनः प्रभुर्गणस्वामी दुर्भिक्षके द्वितीयवारं द्वादशहायनजलवाहावृष्टेरुद्भूतदुष्कालसमये श्रीवज्रस्वामिना दक्षिणस्यां दिशि प्रेषितः सन् अस्य महे-

चत्वार एतत्तनया विनेयाः शाखाभृतस्तस्य विभोर्बभूवुः ।
इवामरद्वेषिचमूजयश्रीजुषः सुरेन्द्रद्विरदस्य दन्ताः ॥६२॥
भर्त्रा सुराणामिव लोकपालेष्वेतेषु सौदर्यंयतीश्वरेषु ।
श्रीचन्द्रनाम्ना मुनिपुंगवेन तत्पट्टपूर्वा प्रमदेन भेजे ॥६३॥
राजा स्वयं राजनतं सदोषो निर्दोषमङ्कोपगतो निरङ्कम् । 5
सास्तो निरस्तं च निजाधिकं यं समीक्ष्य चिक्षाय शशी किमर्त्या ॥६४॥
श्रीचन्द्रसूरेरथ चन्द्रगच्छ इति प्रथा प्रादुरभूद्गणस्य ।
भागीरथीनाम भगीरथाख्यमहीमहेन्द्रादिव देवनद्याः ॥६५॥
कल्लोलिकारुण्यरसान्वितस्य सामन्तभद्रप्रभुरस्य पट्टम् ।
व्यराजयद्वारिरुहाकरस्यमध्यं यथोन्निद्रितपुण्डरीकम् ॥६६॥ 10
वैमुख्यभाग्यो विषयात्कुरङ्गद्वेषीव जज्ञे विपिने निवासी ।
तस्मान्मुनीन्दोर्वनवासिसंज्ञा परा पुनःप्रादुर्भून्मुनीनाम् ॥६७॥
कोरण्टके वीरजिनेन्द्रमूर्तिं दृक्पान्थवृत्तिं कृतपुण्यपाकाम् ।
यः प्रत्यतिष्ठत्किमु सत्त्रशालां स वृद्धदेवो ऽजनि तस्य पट्टे ॥६८॥
प्रद्योतनाह्वप्रभुणा ऽप्यमुष्य पट्टं परं वैभवमावभार । 15
त्रैलोक्यलक्ष्मीतिलकायितेन पितुः स्वपुत्रेण यथान्ववायः ॥६९॥
प्रबोधयन्भव्यसरोजराजीः संशोषयन्दुर्नयकर्दमांश्च ।
दोषोदयं निर्दलयन्महस्वी प्रद्योतनो ऽन्यः किमभूद्भुवोऽयम् ॥७०॥
धिया जयंश्चित्रशिखण्डिसूनुं गङ्गातरंगायितवाग्विलासः ।
श्रीमानदेवः पदमेतदीयं सभ्यः सभास्थानमिवाध्युवास ॥७१॥ 20
पदप्रदानावसरे समीक्ष्य साक्षात्तदंसोपरिवाणिपद्मे ।
राज्यादिव क्षोणिपुरंदरस्य भ्रंशोऽस्य भावी नियमस्थितेर्हा ॥७२॥

---

भ्यस्य द्वितीये आगामिनि दिने वासरे भावि भविष्यत्सुभिक्षं सुकालं न्यवेदयत् कथयामास ॥ + + तस्यैव चतुर्नन्दनस्येभ्यस्य दीक्षाग्रहणवाग्बंधपूर्वकं श्वस्तनदिने याममध्ये पञ्चशतीयुगंधरीधान्यभृतवाहनागमनैर्भाविसुकालमावेदितवान् इत्यर्थः ॥ इति तद्व्याख्यायाम् ॥

इत्थं गुरुं स्वं विमनायमान-मालोक्य लोकेश्वरगीतकीर्तिः।
तत्याज यः षड्विकृतीर्व्रतीन्द्रः षडान्तरारीनिव जेतुकामः ॥७३॥
चमूभिरुर्वीन्द्रमिवामरीभिरुपास्यमानं यमवेत्य कश्चित्।
किं स्त्रीयुतोऽसाविति संशयानो नड्डूलके ऽशिक्ष्यत ताभिरेव ॥७४॥
तदीयपट्टाम्बरभानुमाली श्रीमानतुङ्गश्रमणेन्दुरासीत्। 5
य औजिढत्साधुजनान्निजाज्ञां नाथान्पृथिव्या इव सार्वभौमः ॥७५॥
भक्तामराह्वस्तवनेन सूरिर्बभञ्ज योऽङ्गान्निगडानशेषान्।
प्रवर्तितामन्दमदोदयेन गम्भीरवेदीव करी धरेन्दोः ॥७६॥
श्रीमानतुङ्गः करणेन भक्तामरस्तुतेस्तं क्षितिशीतकान्तिम्।
चकार नम्रं फलपुष्पपत्रभारेण यद्वत्फलदं वसन्तः ॥७७॥ 10

---

७४—चमूभिर्गजवाजिरथपत्तिलक्षणाभिश्चतुरङ्गिणीभिः सेनाभिः उर्वीन्द्रं क्षोणीशक्रमिव। पद्मा-जया-विजया-अपराजिताभिधाभिश्चतसृभिर्देवीभिः प्रत्यक्षमुपास्यमानं सेव्यमानं नड्डूलयनगरोपाश्रयापवरके यं मानदेवसूरिमवेत्य दृष्ट्वा असौ आचार्यः किं स्त्रीयुतो वनिताकलितोऽस्तीति संशयानः संदेहं कुर्वाणः। कश्चित् स्वयं संतिष्ठासुतया दुष्टयवनप्रकरैः प्रगुणतन्निकृष्टनिर्जरनिर्मितजनमायुःपप्लवोपद्रुतेन तिक्षशिलानगरीसंघेन कृतकायोत्सर्गप्रभावादागत (या) नड्डूलपुरस्थितश्रीमानदेवसूरयो यद्यत्रायान्ति तदा शान्तिर्भवेत्, परमत्र म्लेच्छा आगत्य स्थास्यन्ति, ततः संघेन त्रिवर्षीमध्येऽन्यत्र कुत्रापि गत्वा [illegible]मिति जिनशासनदेव्या गिरा श्रीमानदेवसूरीन्द्राकारणार्थं तत्समय एव स्वजनमरकोपद्रवप्रशमनोत्सुकीभूततत्संघेन प्रेपितः। अज्ञातसूरिस्वरूपः कोऽपि श्राद्धः। ताभिर्विजयाप्रमुखसूरीभिरेवाशिक्षि। शिक्षां ताडयित्वा कुट्टयित्वा दृढबन्धनबद्धः पूत्कुर्वाणः कृपापारावारश्रीगुरुवाचैव मुक्तः। यत्रैवंविधाः शंकाभाजः श्राद्धास्तत्र सर्वथापि श्रीपूज्यपादैर्न गन्तव्यमिति विजयादेवतया निषिद्धाः सन्तः श्रीगुरवस्तत्संघे शान्त्यर्थं 'शान्ति शान्तिनिशान्तम्' इति विजयादेवीमन्त्रमयलघुशान्तिं विधाय तच्छ्राद्धेन सार्धं प्रेषयित्वा तत्र मरकोपद्रवं निवारितवानिति शेषः ॥ इति श्रीमानदेवसूरिः ॥ इति तद्वृत्तिः ॥

भयादिसेनाथ हरस्तवेन यो दुष्टदेवादिकृतोपसर्गान् ।
श्रीभद्रबाहुः स्वकृतोपसर्गहरस्तवेनेव जहार संघात् ॥ ७८ ॥
सद्ध्याननागेश्वररश्मिसाम्यमन्याद्रिणालोड्य नदाम्बुराशिम् ।
तत्पट्टलक्ष्मीरथ वीरनाम्नाचार्येण वव्रे वनमालिनेव ॥ ७९ ॥
ततोऽजनि श्रीजयदेवसूरिर्दूरीकृताशेषकुवादिवृन्दः । 5
यद्वाग्विलासैरवहेलितश्रीः सुधा किमु क्षीरनिधौ ममज्ज ॥ ८० ॥
स्वः कामिनीकीर्तितकीर्तिदेवानन्दश्चिदानन्दमना मुनीन्द्रः ।
तारुण्यमेणाङ्कमुखीमिवैतत्पट्टश्रियं वैभवमानिनाय ॥ ८१ ॥
श्रीविक्रमः सूरिपुरन्दरोऽभूत्तत्पट्टदुग्धाब्धिसुधानरीचिः ।
तमश्चमूं हन्तुमनाः समग्रां किं विक्रमोऽङ्गीकृतकाययष्टिः ॥८२॥ 10
आसीत्ततः श्रीनरसिंहसूरिः स वाङ्मयाम्भोनिधिपारदृश्वा ।
अत्याजि यक्षः किल येन मांसं स्वापं जगद्वारिजबन्धुनेव ॥८३॥
महर्घ्यमाणिक्यमिवांगुलीयं पोमाणभूपालकुलप्रदीपः ।
पट्टश्रियं श्रीनरसिंहसूरेरलंकरोति स्म समुद्रसूरिः ॥ ८४ ॥
दिग्वाससो येन विजित्य वादे नागह्रदे नागनमस्यतीर्थम् । 15
स्ववश्यतानीयत भूमिभर्त्रा दुर्गः प्रतीपानिव संपराये ॥८५॥
स मानदेवोऽजनि तस्य पट्टे वाग्देवता यन्मुखपद्मसद्म ।
कृतामृतैश्चारुवचोविलासच्छलादिवोद्गारमिवातनोति ॥ ८६ ॥
पट्टेऽद्वितीये विबुधप्रभेण स्म भूयते सूरिपुरंदरेण ।
येनाभिभूतः किल पुष्पधन्वा पुनर्युयुत्सुर्विषसायुधोऽभूत् ॥ ८७ ॥ 20
तत्पट्टपंकेरुहमानसौकाः श्रीमाञ्जयानन्दविभुर्बभूव ।
यस्याशये ऽनात्समयो ऽप्यशेषः कुम्भोद्भवस्य प्रसृताविवाब्धिः ॥८८॥
यदाननं चन्द्रति दन्तकान्तिर्ज्योत्स्नायते भ्रूयुगमङ्कतीह ।
वाचां विलासोऽपि सुधायते तत्पदे मुनीन्द्रः स रविप्रभोऽभूत् ॥८९॥
यर्विष्णुयत्कीर्तिसुधार्णवेन व्यलुम्पि नानाप्यसितादिभावैः । 25
अर्हन्महिम्नेव जगत्यजन्यैः सोऽभूद्यशोदेवविभुः पदेऽस्य ॥९०॥

प्रद्युम्नदेवोऽथ पदे तदीये प्रद्युम्नदेवोऽभिनवो बभूव ।
भिन्दन्भवं मुक्तरतिर्द्वीयो भवन्भधुर्विश्वविभाव्यमूर्तिः ॥६१॥
श्रीमानदेवेन पुनः स्वकीर्तिज्योत्स्नावदातीकृतविष्टपेन ।
एतत्पदश्रीरगमि प्रतिष्ठां शक्तित्रयेणेव नरेन्द्रलक्ष्मीः ॥ ६२ ॥
वाचंयमेन्द्राद्विमलादिचन्द्रात्पदाब्जभृङ्गीभवदिन्द्रचन्द्रात् । 5
अमुष्य पट्टः श्रियमश्नुते स्म परंतपाद्भूप इव प्रतापात् ॥६३॥
रेजे ऽस्य पट्टे स्मररूपधेयः सुरीन्दुरुद्द्योतननामधेयः ।
दिग्वारणेंद्रा इव सूरिचन्द्राः संजज्ञिरे यत्पदधारिणोऽष्टौ ॥६४॥
मुहूर्तमद्वैतमवेत्य टेलीग्रामस्य यः सीम्नि बृहद्वटाधः ।
अस्थापयच्चैत्यतरोस्तलेऽष्टौ पार्श्वो गणेन्द्रानिव काशिकुंजे ॥६५॥ 10
शाखाप्रशाखाभिरमुष्य वृद्धिर्वृहद्वटस्यैव यतो भवित्री ।
ततो बृहद्गच्छ इतीह नामाऽपरं गणस्य प्रकटीबभूव ॥६६॥
माहात्म्यनम्रीकृतसर्वदेवः पदे तदीये ऽजनि सर्वदेवः ।
वारापतिस्तारकपर्वदेव गुणश्रिया यः प्रभुरन्वयायि ॥६७॥
यो रामसेनाह्वपुरे व्रतीन्दुर्लब्धिश्रियं गौतमवद्दधानः । 15
नाभेयचैत्ये महसेनसूनोर्जिनस्य मूर्तेर्विदधे प्रतिष्ठाम् ॥६८॥
चंद्रावतीशस्य नृपस्य नेत्र इवास योऽशेषविशेषदर्शी ।
तं क्लृप्तचैत्यं प्रतिबोध्य वाचा प्राव्राजयत्कुंकुणमंत्रिणं यः ॥६६॥
कुर्वन्निवासं गवि गौरवश्रीर्गिरामधीशो विबुधैरुपास्यः ।
श्रीदेवसूरिः किमु देवसूरिः पदे तदीयेऽप्यजनि क्रमेण ॥१००॥ 20
दोषोदयोदीततमःप्रपञ्च-व्यापादनव्यापृतिदीक्षितेन ।
श्रीसर्वदेवेन पदं तदीयमदीपि दीपेन यथा निकेतम् ॥१०१॥
श्रीमद्यशोभद्रगणावनीन्द्रः श्रीनेमिचन्द्रव्रतिपुङ्गवश्च ।
तत्पट्टमाकन्दमुभौ भजेते शुकोऽन्यपुष्टश्च यथा विहंगौ ॥१०२॥
तयोः पदे श्रीमुनिचन्द्रसूरिरभूत्ततो निर्मितनैकशास्त्रः । 25
शास्त्रे न कुत्रापि तदीयबुद्धिश्चस्खाल वीङ्खेव समीरणस्य ॥१०३॥

भूपीडखण्डानिव चक्रवर्ती यतीभवन्षड्विकृतीर्जहौ यः ।
कदापि काये न दधन्ममत्वं पपौ पुनर्यः सकृदारनालम् ॥१०४॥
निर्जीयते स्म क्वचनापि नायं कृतोपसर्गैरपि देववर्गैः ।
इतीव नाम्ना भुवि विश्रुतेन जज्ञेऽस्य पट्टेऽजितदेवसूरिः ॥१०५॥
जगत्पुनानः सुमनःस्रवन्तीरयो जटाजूटमिवेन्दुमौलेः । 5
अमुष्य पट्टं विजयादिसिंहोऽध्यासांबभूवाथ तपस्विसिंह ॥१०६॥
सोमप्रभश्रीमणिरत्नसूरी अमुष्य पट्टं नयतःस्म लक्ष्मीम् ।
इक्ष्वाकुवंशं भरतश्च बाहुबलिस्तनूजाविव नाभिसूनोः ॥१०७॥
श्रीमज्जगच्चन्द्र इदंपदश्रीललामलीलायितमाततान ।
येनोज्झि शैथिल्यपथस्तटाको घनाविलो मानसवासिनेव ॥१०८॥ 10
द्वात्रिंशदाशावसनैरभेद्यो वादं सृजन्हीरकवद्यदासीत् ।
आघाटभूपेन स हीरलाद्यो नाम्ना जगच्चन्द्र इति न्यगादि ॥१०९॥
आचाम्लकैर्द्वादशहायनान्ते तपेत्यवापद्भिरुदं मुनीन्दुः ।
महाहवैर्वैरिविनिर्नयान्ते भर्तेव भूमेर्जितकाशिसंज्ञाम् ॥११०॥
अस्मात्ततः प्रादुरभूत्तपाख्या नेत्रादिवात्रेर्द्विजराजलेखा । 15
अदीपि यस्माच्च मुमुक्षुलक्ष्म्या वसन्तमासादिव भानुभासा ॥१११॥
देवेन्द्रकर्णाभरणीभवद्भिर्यशोभिरुद्भासितविष्टपेन ।

---

१०९—यद्यस्मात्कारणाद्यः श्रीजगच्चन्द्रसूरिः द्वात्रिंशत्संख्याकैराशावसनैर्दिगम्बराचार्यैर्वादिभिः सार्धं वादं सृजन् कुर्वन् हीरकवद्वज्रमणिरिव अभेद्यो भेत्तुमशक्यः अजेय आसीत् तत्कारणादाघाटनामनगरस्य भूपेन राज्ञा संप्रति लोके आहडनगरमिति प्रसिद्धपुरस्य स्वामिना स सूरिः इदमेतन्न्यगादि प्रोक्तः । इदं किम् । यदयं सूरीन्द्रो नाम्ना हीरला इतिपदमाद्यं यत्र तादृशो जगच्चन्द्र एतावता हीरलाजगच्चन्द्रसूरिरिति कथितः । इति तद्वृत्तिः ॥

१११—ततस्तपा इति नामकथनान्तरं तद्दिनमारभ्य च अस्माज्जगच्चद्रसूरेर्बृहद्गच्छस्य तपागच्छ इत्याख्या नाम प्रादुरासीत् प्रकटीबभूव ॥ + + इतिबृहद्गच्छस्य 'तपागच्छ' इति षष्ठं नाम संजातम् ॥ इति व्याख्यायां ॥

देवेन्द्रदेवेन बभेऽस्य पट्टे विष्णोर्यथा वक्षसि कौस्तुभेन ॥११२॥
निजाङ्गनोद्गीतयदीयकीर्तिं शुश्रूपुरक्षिश्रवसामृभुक्षाः ।
चक्षुःसहस्रे रसिकः किमाधात्पट्टे स तस्याजनि धर्मघोषः ॥११३॥
मिथ्यामतोत्सर्पणवद्धकक्षं प्रेक्ष्य क्षितौ जीर्णकपर्दिनं यः ।
प्रबोध्य वाचा जिनराजबिम्बाधिष्ठायकं पूर्वमिव व्यधत्त ॥११४॥ 5
शिष्यार्थनानिर्मितसंस्तवस्याऽनुभावतो दिवकपत्तनेऽब्धिः ।
भूपस्य शुश्रूपुरिवास्य रत्नं तरङ्गहस्तैरुपदीचकार ॥११५॥
विद्यापुरे योऽखिलशाकिनीनामुपद्रवं द्रावयति स्म सूरिः ।
श्रीहेमचन्द्रो भृगुकच्छसंज्ञे पुरे यथा दुर्धरयोगिनीनाम् ॥११६॥
यो योगिनं पुष्पकरण्डिनीस्थं दुश्चेष्टितैर्भापनवद्धकक्षम् । 10
पादावनम्रं विदधे ऽन्तिमोऽर्हन्निवास्थिकग्रामिकशूलपाणिम् ॥११७॥

---

११६—यः श्रीधर्मघोपसूरिः प्राक् साधुजनसंतापकारिकाणां स्वागमने पट्टकादिमण्डनं मांसलोहकटकीभूतपायसवटकविहारणं च गुरुशयनपट्टिकोत्पाटनचत्वरानयनमित्याद्युपद्रवविधायकानां श्राविकानामधारिकाणामखिलानां सर्वासां शाकिनीनां सिद्धसीकोत्तरिकाणामुपसर्गमुपद्रवं द्रावयति स्म । चत्वरे गमनान्तरं गुरुभिस्तथायाऽभिमन्त्रितचतुःसूचीनां पट्टिकाचतुःपादोपरिक्षेपणेन स्तम्भितानां विभातप्रायविभावर्यां विवसनानां तासां बहुविलपनाननाङ्गुलीक्षेपणानृपतिमृतिभीतिनिवेदनमहादिसहवाग्बन्धप्रदाननगरजनविज्ञप्त्यवधारणालयान्तःपट्टिकानयनपूर्वकं निवारितान् साधुजनान् निरुपद्रवांश्चक्रे । इति तद्वृत्तौ ॥

११७—यः श्रीधर्मघोपसूरिः पुष्पकरण्डिन्यामुज्जयिन्याम् । 'उज्जयिनी स्याद्विशालावन्तीपुष्पकरण्डिनी' इति हैम्याम् । तिष्ठतीतिपुष्पकरण्डिनीस्थस्तं कमपि सिद्धचेटकपेटकमत एव दुष्टचेष्टितैर्भयंकरप्रकारैः साधूनां भापने भयोत्पादने बद्धकक्षं सज्जीभूतं कोऽपि साधुस्तं प्रतिकर्तुं न शक्नोति अतएव तद्भयकरणप्रकारमाह—प्राक् साधुविहारनिषेधकं, गुर्वागमने च गोचरीगतसाधूनां प्रश्ने स्वास्यस्थ । गुरुशिक्षितैस्तैरुक्तम् । स्थिताः स्म । ततो महत्कुद्दालतुल्यदन्तानदर्शयद्योगी । साधवः कपोणिक

यस्योपदेशान्नृपमन्त्रिपृथ्वीधरश्चतुर्भिः सहितामशीतिम् ।
ज्ञातीरिवोद्धर्तुमिदंमिताः स्वा न्यधापयत्तीर्थकृतां विहारान् ॥११८॥
दंशादहेर्ग्राहितकाष्ठभारविपौषधीसज्जतनुर्निशान्ते ।
महात्मवचो विकृतीर्विहाय वृत्तिं न्यधादेव युगंधरीभिः ॥११९॥
यस्माद्दिदीपे चरणस्य लक्ष्मीर्ज्योत्स्नेव चान्द्री शरदोऽनुपङ्गात् । 5
सोमप्रभाख्यो जनहृत्चकोरीसोमप्रभः सूरिरभूत्पदेऽस्य ॥१२०॥
तेनापि सोमतिलकाभिधसूरिरात्म-पट्टे न्यवेशि वशिलब्धिमलसल्ललामम् ।
वादेषु येन परवादिकदस्वकस्या-ऽनध्यायता प्रतिपदेव मुखे न्यवासि ॥१२१॥
संस्थापितो निजपदे गुरुणाथ तेन श्री देवसुन्दरगुरुः सुरसुन्दरश्रीः ।
अह्नोसुखेन तिमिरेण तमस्विनीव येन न्यपास्यत समं मदनेन माया ॥१२२॥ 10
घूकैरर्कमिव द्विषद्भिरुदये हन्तुं परैः प्रेषितं ।
कंचिचन्द्ररुचः प्रमादविमुखं स्वापे ऽपि दृष्ट्वा प्रभुम् ।

---

दर्शयित्वा गुरुपार्श्वे गताः । तत उपाश्रयेऽपि अतिभयंकरप्रचुरोन्दरविडालकुक्कुर-शृगालश्वापदवृश्चिकभुजगादिदर्शनादिना गुरुमपिभापनोद्यतं प्रभुणा च जैनमन्त्रस्मरणानुभावेन पुरुजननृपतच्छिष्यसनत्वं मंत्राधिष्ठायकेन बध्ध्वा पुरप्रासादशिखरसंवदना-स्फालनपूर्वकं धनछुप्यमाणप्रवहच्छोणितशरीरं शिष्या अहं म्रिये म्रिये कोऽपि मामवत्विति इतः पुलर्दीनभाषिणं वेदनया पूत्कुर्वाणं गगनेनोपाश्रये नीतं योगिनं पदावनम्रं स्वस्थानेनमनशीलं विदधे कृतवान् । कः इव । अर्हन्निव यथा अन्तिमश्चरमश्चतुर्विंशतितमोऽर्हन् जिनः श्रीमन्महावीरदेवः अस्थिकग्रामस्थायुकशूलपाणिनामानं यक्षं स्वचरणसेवापरायणं चक्रे । सोऽपि किंभूतः । दुष्टैर्जीवप्रणाशनकरैश्चेष्टितैरुपसर्गैर्भगवतो भाद्रपदयतम् । इति तद्वृत्तिः ॥

११८—यस्य दस्योपदेशाच्च श्रीशत्रुंजयगिरिनारिसंघपतीभवन् रैवतगिरौ च इदमस्माकं तीर्थमिदमस्माकं तीर्थमिति मिथो दिगम्बरैः सह विवादे 'य इन्द्रमालां परिधत्ते तस्येदं तीर्थम्' इति संघवृद्धैः प्रोक्ते सुवर्णसिद्धचाम्नायेन स्वकृतसुवर्णपट्पञ्चाशद्धटीभिः इन्द्रमालां परिहितवान्, तथा शत्रुंजयोज्जयन्तमूलप्रासाद शिखरद्वयोरेकसौवर्णध्वजाधिरोपणाद्विना चाष्टौ धटीकाश्रपि तवांश्चेति शेषः । तद्वृत्तौ

क्षाम्यन्तं गदिताखिलव्यक्तिकरं संबोध्य योऽदीक्षय—
त्स श्रीमानथ सोमसुन्दरगुरुर्भेजे तदीयं पदं ॥१२३॥

पट्टश्रियास्य मुनिसुन्दरसूरिशक्रे संप्राप्तया कुवलयप्रतिबोधदक्षे ।
कान्तेव पद्मसुहृदः शरदिन्दुविम्बे प्रीतिः परा व्यरचिलोचनयोर्जनानाम्॥१२४॥

योगिनीजनितमार्युपप्लवं येन शांतिकरसंस्तवादिह । 5
वर्षणादिव तपर्तु तप्तयो नीरवाहनिवहेन जघ्निरे ॥१२५॥

बाल्येऽपि रश्मीन्सरसीजबन्धुरिवावधानानि वहन्सहस्रम् ।
अष्टोत्तरं वर्तु लिकानिनादशतं स्म वेवेक्ति धियां निधिर्यः ॥१२६॥

अलम्भि याम्यां दिशि येन काली सरस्वतीदं विरुदं बुधेभ्यः ।
रवेरुदीच्यामिव तत्र तेजोऽतिरिच्यते यत्पुनरत्र चित्रम् ॥१२७॥ 10

सूरेस्ततोऽजायत रत्नशेखरः श्रीपुण्डरीको वृषभध्वजादिव ।
वाम्बीति नाम्ना द्विजपुङ्गवेन न्यगादि यो बालसरस्वतीति ॥१२८॥

लक्ष्मीसागरसूरिशीतमहसा लक्ष्मीरवापे ततो
दीपेनेव गुणोदयं कलयता ज्योतिर्वृहद्भानुतः ।
गायन्तीः सुरसुन्दरीगुणगणान्यस्याष्टदिक्सङ्गिनी— 15
र्विज्ञायाष्ट विनिर्ममे किमु विधिः श्रोतुं श्रुतीरात्मनः ॥१२९॥

सुमति साधुरभूदथ तत्पदे त्रिजगतीजननेत्रसुधाञ्जनम् ।
समकुचत्त्रपया हृदि यद्गिरां मधुरिमाधरिता किमु गोस्तनी ॥१३०॥

---

१२६—यो मुनिसुन्दरसूरिर्बाल्येऽपि शैशवे क्षुल्लकत्वेऽपि अष्टाभिरधिकं वर्तुलिकानां कचोलिकानां 'वाटका कचोली' इति प्रसिद्धानां निनादानां शब्दानां शतं क्वचित्सहस्रमपि वेवेक्ति पृथक् पृथक् कृत्वा कथयति स्म । पत्तनसमागतैरभुक्तदेशोपेतपण्डितद्विजं पत्रावलम्बनं विधाय प्रतिपत्तनपण्डितस्थानं जलभृतकुण्डलकं तृणपुलकं च स्वशिष्यैर्मोचयन्तं तच्छिष्यनिर्घाटनपूर्वकं मुनिसुन्दरशिशुना राजसभायां स्वेन सार्धं समागतचतुरशीतिपौषधशालासत्काचार्यैर्वादेजायमाने पयमास्यन्ते राजकथकनपूर्वं स्वादृष्टाष्टोत्तरशतवर्तुलिकानां पृथक पृथक् शब्दान् कथयित्वा तं बिजिग्ये । इति तद्वृत्तौ ॥

शीलेन जम्बुगणनाथ इवात्र वज्र-स्वामी परः किमथ वा महिमोदयेन ।
जज्ञे नवद्वयशत१८००व्रतिसेव्यमानो नाम्नाथ हेमविमलः प्रभुरस्य पट्टे ॥१३१॥

विभूषासद्भावामकलयदथाऽऽनन्दविमले
व्रतीन्द्रे विद्राणाखिलकुदृशि तत्पट्टकमला ।
वसन्ते वासन्तीततिरिव पुनर्धर्मजयिनि 5
क्षितीन्द्रे राज्यश्रीरिव विजितविश्वप्रतिभटे ॥१३२॥
त्यक्त्वाशेषकुपक्षिकांश्च कुदृशः किंपाकभूमीरुहा—
न्सोलम्बैरिव पारिजातशिखरी यो जन्मिभिः शिश्रिये ।
येनात्मा शिथिलीभवन्मुनिपथादप्युद्धृतः सूरिणा
संसाराम्बुनिधेरिवोद्धतकुदृग्यादोव्रजव्याकुलात् ॥१३३॥ 10
शुद्धां क्रियामुद्धरतोऽस्य भाविनीमद्भुतप्रवृद्धिस्तमितीव शंसितुम् ।
स्वप्नेऽनुयुक्तेरनु कस्यचिज्जिनध्यातुर्द्वितीयेन्दुरदर्शयन्निजम् ॥१३४॥
जैनार्चाश्रमणाद्यभावभणनाम्भःप्लाव्यमानात्मनां ।
जज्ञे द्वीप इव व्रतीशितुरिहोद्धारः क्रियाया नृणाम् ॥
विद्यासागरनामवाचकवरो यस्याथ दुर्दृग्गणा— 15
न्सेनानीरिव चक्रिणो रिपुनृपान्प्राक्स्वस्यवश्यान्व्यधात् ॥१३५॥

---

१३४—तथा-क्रियोद्धारचिकीर्षुना सूरीन्द्रेण कश्चित्सिद्धश्रीपार्श्वनाथमन्त्रः श्राद्धः प्रथमं पृष्टस्तेन च ध्यानं विदधता किंचिन्निद्रामुद्रितनेत्रेणाभ्युदयमानं द्वितीयाचन्द्रं दृष्ट्वा समेत्य प्रभुपुरः प्रोचे । यद्यूयं द्वितीयाचन्द्र इव दिने दिने वर्धमानाभ्युदयभाजो भविष्यथ, तत्त्वरितमेव क्रियोद्धारं कुरुत, विलम्बो नैव विधेयः । ततः श्रीआनन्दविमलसूरिणा श्रीहेमविमलसूरिशासनपूर्वं शुद्धक्रिया उद्धृता इति वादः । इति तद्व्याख्यायां ॥

१३५—जैनार्चानां तीर्थंकृत्संबन्धिनीनां प्रतिमानां, तथा श्रमणानां साधूनामभावमसत्तां, सिद्धांते क्वापि प्रतिमा प्रोक्ता नास्ति गुर्जरादिदेशेषु साधवः सर्वथा न सन्तीति भणनं लुम्पाककटुकमतीनां कथनम् ॥ इति तद्वृत्तौ ॥

प्रातः साधुवृतस्त्वदापणपुरो यो याति सूरीशिता
सम्यक्संयमवान्स पूर्वगणिवत्सेव्यस्त्वयाहर्निशम् ।
स्वप्ने ऽस्वप्नगिरेति यं निजगृहे नीत्वातिभक्त्या प्रभुं
श्राद्धः कश्चन मण्डपाद्रिवसतिर्भेजे सगोत्रैः समम् ॥१३६॥
तमःस्तोमप्राये कुनयनगणैर्दारुणतमे 5
कलौ श्रीसूरीन्दुः शरणमभवो जनिमताम् ।
मृगारातिव्यालद्विरदशबरव्यूहबहुले
गिरेर्दुःसंचारे गहन इव सार्थः पथिजुषाम् ॥१३७॥
गभीरिम्णा पाथोनिधिरिव महिम्नापरमरुद्—
गिरिश्चेतोजन्मप्रतिभटतया वा गगनजित् । 10
प्रसारै रश्मीनां सरसिरुहिणीनामिव पतिः
पवित्रीचक्रे यो विहृतिभिरशेपा अपि दिशः ॥१३८॥
यो दक्षिणावर्त इव स्रवन्तीपतिस्रवे कम्बुकदम्बकेन ।
वाचंयमानां निवहेन पृथ्वीपीठे परीतो विजहार सूरिः ॥१३९॥
भागीरथीव यद्ब्राह्मी पुनीते भुवनत्रयम् । 15
परं विशेपः कोऽप्यस्या निम्नगा न कदाचन ॥१४०॥
ये कर्णाभरणीबभूवुरनिशं विश्वत्रयीजन्मिनां ।
सान्द्रोन्निद्रितचंद्रिका इव शुचीचक्रुस्त्रिलोकीमपि ।
यान्संस्तोतुमिवाभवद्भुजगराट् जिह्वासहस्रद्वय—
स्तेषां सूरिपुरंदरः स समभूदेको गुणानां निधिः ॥१४१॥ 20

---

१३६—हे वत्स, त्वं तु दुर्वादिव्रातविविधविरुद्धालपनाकर्णनाकलितानेककल्पनाजनितसंशीतिव्याकुलीकृतनैकलोककलियुगानुभावात्कटुमतिरसि । तथापि प्रातः प्रभाते यामानन्तरमष्टभिः साधुभिः श्रमणैः परिकलितः यः सूरीशिता सुरीन्द्रः त्वदापणस्य तव हट्टस्य पुरोऽग्रे याति गच्छति, स सूरिरस्मिन् कलियुगे सम्यक् संयमवान् । विशुद्धचारित्रकलितः तथा भवताहर्निशं निरन्तर पूर्वगणिवत् प्राचीनाचार्य इव सेव्य उपासनीयः । इति तद्वृत्तौ ॥

अश्रोत्रैः श्रोतुकामैर्भुजगपरिवृढैर्यज्जगद्गीतकीर्ति

शब्दाधिष्ठानसृष्ट्यै शतदलनिलयो याचितस्तां चिकीर्षुः ।

न्याय्या नासौ मयातिक्रमितुमिह जगत्सर्गभङ्गीव्यवस्था

शक्तिं शब्दं ग्रहीतुं किमिति स कृतवानेव तद्दृष्टिसर्गे ॥१४२॥

भूरेषा किमु चंद्रचन्दनरसैरालिप्यते सर्वतो 5

दुग्धाब्धिप्रसरत्तरङ्गितपयःपूरैरिवाप्लाव्यते ।

क्षोदैर्मौक्तिकजैर्विलीनतुहिनैः कुन्दैरुतापूर्यते

यत्कीर्तिं प्रसृतां विभाव्य विबुधैरित्यन्तरारेक्यते ॥१४३॥

विजयदानमुमुक्षुपुरन्दरः पदममुष्य ततः समभूषयत् ।

उदयभूमिभृतः शिखरं शरद्विशददीप्तिरिवाम्बरकेतनः ॥१४४॥ 10

आज्ञां यस्य विधाय मूर्धनि मुदा शीर्षामिवाप्तप्रभोः

सौराष्ट्रेषु जगर्षिनामविबुधाधीशा विहारैर्निजैः ।

लुम्पाकान्परिवर्तमारुत इव प्रोन्मूल्य मूलाद्द्रुमा—

न्सम्यक्त्वाख्यकृषिं सुखं कुलवर्ती चक्रे नभोम्भोदवत् ॥१४५॥

प्राबोधयद्दुष्करनैकतीव्रतपोभिराप्तोक्तिकृतोक्तियुक्तिभिः । 15

स तत्र लुम्पाकजनं यतीन्द्रो भास्वानिवाऽम्भोजवनं मरीचिभिः॥१४६

यद्वाचा गलराजमंत्रिमुकुटो निर्माप्य षाण्मासिकीं

मुक्तिं सिद्धगिरौ व्यधाद्भरतवद्यात्रां समं यात्रिकैः ।

पञ्चार्चीं दमितुं च पञ्चविकृतीस्तत्याज यः सर्वदा

प्राणश्यंस्तरणेर्ग्रहा इव पुनर्यस्योदये दुर्दृशः ॥१४७॥ 20

---

१४७—यस्य श्रीविजयदानसूरेर्वाचा अर्थादुपदेशेन कृत्वा गलराज इति नाम्ना मंत्रिषु प्रधानेषु मुकुटः कोटीरः गलराजः । अथवा गलो महत्तो इति लोके प्रसिद्धः । स षट्सु मासेषु भवा षाण्मासीकी । षण्मासान् यावदित्यर्थः । मुक्तिं 'मुगतड' इति प्रसिद्धां "केनापि कस्यापि पार्श्वे शुल्कद्रवीणं न मार्गणीयम् अहमेव श्रीमदुक्तं यथेप्सितं द्रव्यं दास्यामि" इत्यधिपस्य प्रोक्त्वा या यात्रिकाणां यात्रा कार्यते सा मुक्तिरिति । तां निर्माप्य कारयित्वा सिद्धगिरौ श्रीशत्रुंजये भरतवत् ऋषभदेवनंदन-

रत्नानामिव रोहणोऽम्बुरुहिणीप्रेयानिव ज्योतिषां
विंध्यांद्रिः करिणामिवामरगिरिः स्वर्भूरुहाणामिव ।
लब्धीनां वसुभूतिनन्दन इवाम्भोधिः सुधानामिव
श्रीमत्सूरिशतक्रतुर्भुवि चिरं जीयाद् गुणानां गृहम् ॥१४८॥

यं प्रासूत शिवाह्वसाधुमघवा सौभाग्यदेवी पुनः 5
पुत्रं कोविदसिंहसीहविमलान्तेवासिनामग्रिमम् ।
तद्ब्राह्मीक्रमसेविदेवविमलव्यावर्णिते हीरयु—
क्सौभाग्याभिधहीरसूरिचरिते सर्गश्चतुर्थो ऽभवत् ॥१४९॥

इतिश्रीसीहविमलगणिशिष्य—पण्डितदेवविमलगणिविरचिते हीरसौभाग्यनाम्नि महाकाव्ये श्रीमन्महावीरदेवपट्टपरम्परावर्णनो नाम चतुर्थः सर्गः + 10

---

प्रथमचक्रवर्तिसंघपतेरार्यैभिरिव यात्रिकैर्यात्रां कर्तुमागतैः सज्जनैः समं सार्धं यात्रां व्यधाच्चकार ॥ इति तद्व्याख्यायाम् ॥

+ पं० श्रीपतिः । तस्याष्टौ शिष्याः । तेषु धुर्यो बालब्रह्मचारी कविः षड्विकृतित्यागी यावज्जीवमाषष्ठतपोविधायी तपस्वी देवसान्निध्यः श्रीविजयदानसूरीशाज्ञया सौराष्ट्रे विहारेण लुम्पाकमतोच्छेदकः योधपुरे यद्विवादभयेन नृपमालदेवपृष्ठाश्रितवाचकपार्श्वचंद्रः एकादशांगीधरः श्रीजगर्षिगणिः॥ तच्छिष्यो गौतमवादिविजेता नारायणदुर्गादिनृपप्रतिबोधकः कायस्थमण्डलिकचन्द्रभाणस्थानसिंहादिश्रावककारकः बहुप्रतिष्ठा विधायकः आदिदेवसमवसरणप्रकरविधाता पं० श्री सीहविमलो गणिः । तच्छिष्यः पं० देवविमलो येन विक्रमाब्दात् १६२९ तः प्रारभ्य १६७१ अवधिवर्षेषु स्वोपज्ञं श्रीहीरसौभाग्यकाव्यं विदधे, यत् उ०कल्याणविजयशिष्यधनविजयेन समशोधि ॥ इति श्रीहीरसौभाग्यप्रशस्तौ ॥

*अनुपूर्तिः १—*

सूरीन्द्रहीरविजयः प्रतिपद्य पट्ट—लक्ष्मीं गुरोरनु विशिष्य पुपोष भूपाम् ॥
वप्तुर्जिनस्य युवराज इवाधिपत्यं क्रान्तारिचक्रमखिलाऽम्बुधिमेखलायाः ॥
मण्डयत्यमरमन्दिरं गुरौ, दीप्यते स्म मुनिवासवो ऽधिकम् ॥
यामिनीप्रियतमे पराम्बुधेर्मध्यभागमिव पद्मिनीपतिः ॥२॥ 5
श्रीहीरसौभाग्यकाव्ये सर्ग—६, श्लोकौ-१८७—१८८ ।

*अनुपूर्तिः २—*

अथसाहिः (अकब्बरं) मनसा श्रीगुरूनेवं प्रशशंस
प्रावीण्यमन्यहितकर्मणि पश्यतैषां, तथ्यं यतो व्यवसितिर्महतां परार्था ॥
विश्वं शशीव धवलत्यखिलं कलाभिरंभोभरैर्जलधरोऽपि धरां धिनोति ॥१॥ 10
मुध्नां दधाति वसुधां भुजगाधिराजो, नैःस्थ्यं निहन्ति मणिरध्वरभागभाजाम् ॥
आमोदयन्ति हरितो हरिचन्दनानि, भिन्दन्ति संतमसमंबरकेतवो ऽपि ॥२॥
साला दिशन्ति च फलानि पचेलिमानि, वार्धेर्वशा अपि वहंति पयःप्रवाहान् ।
विश्वोपकारकरणैकनिबद्धकक्षै-रेभिर्बभूव वसुधा किमु रत्नगर्भा ? ॥३॥
श्रीहीरसौभाग्यकाव्ये सर्ग-१४, श्लोकाः १८३,१८४,१८५ । 15

*अनुपूर्तिः—३*

श्रीसूरिहीरविजये भजति द्युलोकमभ्युद्गते विजयसेनगणावनीन्द्रे ॥
प्रीतिं जना दधति शीतरुचौ प्रयाते, क्षेत्रांतरं समुदितें ऽशुमतीव कोकाः॥१॥
तत्पट्टोदयभूधरभास्वान्श्रीविजयदेवसूरीन्द्रः ॥
भजते तपगणराज्यश्रियमुर्वीसार्वभौम इव ॥२॥ 20
सीहगिरेरिव वज्रस्वामी तस्यैष पदपयोधिविधुः ॥
श्रीविजयदेवसूरिक्षोणीन्द्रः पर्वतायुः स्यात् ॥३॥
श्रीहीरसौभाग्यकाव्ये सर्ग-१७, श्लोकाः २०८,२०९,२१०, ।

॥ इति समाप्ता परम्परा ॥

---

## श्रीयुगप्रधानाः

( कर्ता—महोपाध्यायश्रीविनयविजयगणिः )

पूर्वर्ष्यपेक्षयैवं च, हीनहीनगुणैरपि ॥
मोक्षमार्गाद्यवाप्तिः स्या—न्निर्ग्रन्थैरेव नापरैः ॥९८॥
विषमेपि च कालेस्मिन्, भवंत्येव महर्षयः ॥
निर्ग्रन्थैः सदृशाः केचिच्चतुर्थारकवर्तिभिः ॥९९॥
यथास्यामवसर्पिण्यामेतस्मिन् पंचमे ऽरके ॥ 5
त्रयोविंशतिरादिष्टा, उदयाः सततोदयैः ॥१००॥
विंशतिः१प्रथमे तत्र, युगप्रधानसूरयः ॥
उदये स्युर्द्वितीयस्मिन्, त्रयोविंशतिरेवर ते ॥१०१॥
तृतीये ऽष्टाढ्यनवतिः३, चतुर्थे चा ऽष्टसप्ततिः ॥
पंचसप्तति ५ रेकोननवतिः ६ शतमेव ७ च ॥१०२॥ 10
सप्ताशीति ८ स्तथापंच-नवतिश्च ९ ततः परं ॥
सप्ताशीतिः १० षट्सप्तति ११-रष्टसप्ततिरेव च १२ ॥१०३॥
चतुर्नवति १३ रेवाष्टौ १४, त्रयः १५ सप्त १६ चतुष्टयं १७ ॥
शतं पंचदशोपेतं १८, त्रयस्त्रिंशं शतं १९ शतं २० ॥१०४॥
पंचाधिका ऽथ नवतिं २१-र्नवतिश्च नवाधिका २२ ॥ 15
चत्वारिंशत् २३ क्रमादेते, यथोक्तोदयसूरयः ॥१०५॥
श्री सुधर्मा१ च वज्रश्च २, सूरिः प्रातिपदाभिधः ३ ॥
हरिस्सहो४ नन्दिमित्रः५, सूरसेनस्तथापरः ६ ॥१०६॥
रविमित्रः७ श्रीप्रभश्च ८, सूरिर्मणिरथाभिधः ९ ॥
यशोमित्रो १० धनशिखः११, सत्यमित्रो १२ महामुनिः ॥१०७॥ 20

धम्मिल्लो १३ विजयानंद१४-स्तथा सूरिः सुमंगलः१५ ॥
धर्मसिंहो १६ जयदेवः१७ सुरदिन्नाऽभिधो गुरुः१८ ॥१०८॥
वैशाखश्चाऽथ १९ कोडिन्यः २०, सूरिः श्रीमाथुराह्वयः २१ ॥
वणिक्पुत्रश्च २२ श्रीदत्त २३, उदयेष्वाद्यसूरयः ॥१०९॥
स्यात्पुष्पमित्रो १ ऽर्हन्मित्रः २, सूरिर्वैशाखसंज्ञकः ३ ॥ 5
सुकीर्ति ४ स्थावर ५ रथ-सुताश्च ६ जयमंगलः ७ ॥११०॥
ततः सिद्धार्थ ८ ईशानो ९, रथमित्रो १० मुनीश्वरः ॥
आचार्यो भरणीमित्रो ११ दृढमित्राऽऽह्वयो ऽपि-१२ च ॥१११॥
संगतिमित्रः १३ श्रीधरो १४ मागध १५ श्रा ऽमराभिधः १६ ॥
रेवतीमित्र१७सत्कीर्ति-मित्रौ १८ च सुरमित्रकः १९ ॥११२॥ 10
फल्गुमित्रश्च २० कल्याण-सूरिः २१ कल्याणकारणं ॥
देवमित्रो २२ दुष्प्रसह २३, उदयेष्वंत्यसूरयः ॥११३॥
श्रीसुधर्मा च जम्बूश्च, प्रभवः सूरिशेखरः ॥
शय्यंभवो यशोभद्रः, संभूतिविजयाऽऽह्वयः ॥११४॥
भद्रबाहुस्थूलभद्रौ, महागिरिसुहस्तिनौ ॥ 15
घनसुंदरश्यामार्यौ, स्कंदिलाचार्य इत्यपि ॥११५॥
रेवतीमित्रधर्मौ च, भद्रगुप्ताभिधो गुरुः ॥
श्रीगुप्तवज्रसंज्ञार्य-रक्षितौ पुष्पमित्रकः ॥११६॥
प्रथमस्योदयस्येति, विंशतिः सूरिसत्तमाः ॥
त्रयोविंशतिरुच्यन्ते, द्वितीयस्याऽथ नामतः ॥११७॥ 20
श्रीवज्रो नागहस्ती च, रेवतीमित्र इत्यपि ॥
सिंहो नागार्जुनो भूत-दिन्नः कालकसंज्ञकः ॥११८॥
सत्यमित्रो हारिलश्च, जिनभद्रो गणीश्वरः ॥
उमास्वातिः पुष्पमित्रः, संभूतिः सूरिकुंजरः ॥११९॥
तथा माढरसंभूतो धर्मः श्रीसंज्ञको गुरुः ॥ 25
ज्येष्ठांगः फल्गुमित्रश्च, धर्मघोषाह्वयो गुरुः ॥१२०॥

सूरिर्विनयमित्राख्यः, शीलमित्रश्च रेवतिः ॥
स्वप्नमित्रो हरिमित्रो, द्वितीयोदयसूरयः ॥१२१॥

स्युस्त्रयोविंशतेरेव—मुदयानां युगोत्तमाः ॥
चतुर्युक्ते सहस्रे द्वे, मीलिताः सर्वसंख्यया ॥१२२॥

एकावतारा सर्वेऽमी, सूरयो जगदुत्तमाः ॥ 5
श्रीसुधर्मा च जंबूश्च, ख्यातौ तद्भवसिद्धकौ ॥१२३॥

अनेकातिशयोपेता, महासत्वा भवंत्यमी ॥
घ्नन्ति सार्धद्वियोजन्यां, दुर्भिक्षादीनुपद्रवान् ॥१२४॥

एकादशसहस्राश्च लक्षाश्च षोड़शाऽधिकाः ॥
युगप्रधानतुल्याः स्युः, सूरयः पंचमारके ॥१२५॥ 10

तथोक्तं, दुष्षमारकसंघस्तोत्रे (गाथा १८)—
जुगपवरसरिससुरी दूरीकयभवियमोहतमपसरें ॥
वन्दामि सोलसुत्तर इगदस लक्खे सहस्से य ॥१॥
संतु श्रीवर्द्धमानस्येत्यादि ॥ दीवालीकल्पे तु (१११६०००)—
जुगप्पहाण समाणा, एगारसलक्ख सोलससहस्सा ॥ 15
सूरिओ हुँति अरए, पंचमे जाव दुप्पसहे ॥२॥ +
कोटीनां पंचपंचाश—ल्लक्षास्तावन्त एव च ॥
सहस्राश्च शताः पंच, सर्वे स्वाचारसूरयः ॥१२६॥

त्रयस्त्रिंशच्च लक्षाणि, सहस्राणां चतुष्टयी ॥ ३३०४४९१
चतुःशत्येकनवतिः, सूरयो मध्यमा गुणैः ॥१२७॥ 20

अस्मिन्नेवारकेऽभूवन्, पूर्वाचार्या महाशयाः ॥
श्रीजगच्चन्द्रसूर्याद्या—स्तपागच्छाऽन्वयक्रमे ॥१२८॥

---

+ श्री धर्मघोषसूरिकृतकालसप्ततिकायां ३३ गाथायामेतत्संख्याया एव स्वीकारः ॥

सूरयो बप्पभट्टाख्या, अभयदेवसूरयः ॥
हेमाचार्यश्च मलय—गिर्याद्याश्चाऽभवन्परे ॥१२६॥
विजयन्तेऽधुनाऽप्येवं, मुनयो नयकोविदाः ॥
अत्युग्रतपसश्चारु—चारित्रमहिमाऽद्भुताः ॥१३०॥
एवं मध्यस्थया दृष्ट्या, पर्यालोच्य विवेकिभिः ॥ 5
न कार्यः शुद्धसाधूनां, संशयः पंचमेऽरके ॥१३१॥
दुष्पमारकपर्यन्ता——वधि संघश्चतुर्विधः ॥
भविष्यत्यव्यवच्छिन्न, इत्यादिष्टं जिनैः श्रुते ॥१३२॥
तथोक्तं भगवत्यां—जम्बूद्दीवेणं दीवे भारेह वासे इमीसे उसप्पिणीए
देवाणुप्पियाणं केवइयं कालं तित्थे अणुसज्जिस्सति ? 10
गो० ! जंबु० भारहे इमीसे उस० मम एक्कवीसवाससहस्साइं तित्थे
अणुसज्जिस्सति । इति, भगवती श० २० उ० ८ (सू०६७८) ॥

दीवाली कल्पे तूक्तं—

वासाण वीससहस्सा नवसय तिम्मास पंचदिण पहरा ॥
इक्का घड़िया दोपल अक्खरअडयाल जिणधम्मो ॥१३३॥ 15

( अथ दुष्प्रसहसूरेरधिकारः )—×

पर्यन्ते त्वरकस्यास्य, सूरिर्दुष्प्रसहाभिधः ॥
रत्नद्वयोच्छ्रितो विंशत्यब्दजीवी भविष्यति ॥१३४॥
स्वर्गाच्च्युत्वा समुत्पन्नो, गृहे द्वादशवत्सरीं ॥
स्थित्वा सामान्यसाधुत्वे, चत्वार्यब्दान्यसौ शुचिः ॥१३५॥ 20
चत्वार्यब्दानि सूरित्वे, स्थित्वाष्टाऽब्दानि च व्रते ॥
स्वर्गमेष्यति सौधर्म—मंते कृत्वाऽष्टमं कृती ॥१३६॥
दशवैकालिकं जीत—कल्पमावश्यकं च सः ॥
अनुयोगद्वारं नंदिं, नतेंद्रो धास्यति श्रुतम् ॥१३७॥
साध्वी तदा च फल्गुश्रीः, श्रावको नागिलाभिधः ॥ 25
सत्यश्रीः श्राविका चेति, ज्ञेयः संघश्चतुर्विधः ॥१३८॥

यतः—एगो साहू एगा य, साहुणी सड्ढओ य सड्ढी वा ॥
आणाजुत्तो संघो, सेसो पुण अट्ठिसंघाओ ॥१३९॥
उत्कृष्टं श्रुतमेतेषां दशवैकालिकावधि ॥
षाण्मासिकतपस्तुल्यं, षष्ठभक्तं भविष्यति × ॥१४०॥
मंत्रीशः सुमुखाभिख्यो, राजा विमलवाहनः ॥ 5
भविष्यतस्तदा लोके, नीतिमार्गप्रवर्तकौ ॥१४१॥
अयं दुष्प्रसहाचार्यो—पदेशेन करिष्यति ॥
चैत्यस्याऽन्तिममुद्धारं, राजा श्रीविमलाचले ॥१४२॥
कोट्यैकैकादशलक्षाः, सहस्राणि च षोडश ॥ १११६००००
उत्तमानां क्षितीशानां, संख्यैषा दुष्षमारके ÷ ॥१४३॥ 10
कोटयः पञ्चपञ्चाश ५५–ल्लक्षा५५श्चापि सहस्रकाः५५ ॥
तावंतो ऽथ शताः पंच, पंचपंचाश५५५दन्विताः ॥१४४॥
इयन्तो दुष्षमाकाले निर्दिष्टाः सर्वसंख्यया ॥
नवभिः पंचकैर्नाम–धारिणो ऽधमसूरयः ॥१४५॥ इत्यर्थतो दीपिका कल्पे
इतिश्रीलोकप्रकाशे काललोके चतुस्त्रिंशत्तमे सर्गे 15

युगप्रधानसंबंधः समाप्तः

---

× श्रीधर्मघोष सूरिकृतायां कालसप्ततिकायां गाथा ५०, ५१, ५२, ५३, ५४ गाथास्वपि एषोधिकारो दर्शितोऽस्ति ॥ तत्रयामेव ४४, ४५, ४६, ४७, ४८, ४९ गाथासु कल्की नृपाधिकारोऽस्ति ॥

÷ ५६गाथायां तु १११६००० जैननृपाः इति सतम् ।

## श्रीसूरिपरंपरा

[ कर्त्ता—महोपाध्यायः श्रीविनयविजयगणिः ].

श्रेयः श्रीवर्द्धमानो दिशतु शतमखश्रेणिभिः स्तूयमानः ।
सत्क्ष्माभृत्सेव्यपादः कृतसदुपकृतिर्गोपतिर्नूतनो वः ॥
कालेऽप्यस्मिन्प्रदोषे कटुकुमतिकुहूकल्पितध्वांतपोषे ।
प्रादुष्कुर्वन्ति गावः प्रसृमरविभवा युक्तिमार्गं यदीयाः ॥१॥
तत्पट्टेऽथेंद्रभूतेरनुज उदभवच्छ्रीसुधर्मा गणींद्रो । 5
जंबूस्तत्पट्टदीपः प्रभव इति भवांभोधिनौस्तस्य पट्टे ॥
सूरिः शय्यंभवोऽभूत्स मनकजनकस्तत्पदांभोजभानु—
स्तत्पट्टैरावतेंद्रो जनविदितयशाः श्रीयशोभद्रसूरिः ॥२॥
तत्पट्टभारधुर्यौ गणधरवर्यौ श्रियं दधाते द्वौ ।
संभूतविजयसूरिः सूरिः श्रीभद्रबाहुश्च ॥३॥ 10

श्रीस्थूलभद्र उदियाय तयोश्च पट्टे, जातौ महागिरिसुहस्तिगुरू ततश्च ।
पट्टे तयोः श्रियमुभौ दधतुर्गणींद्रौ, श्रीसुस्थितो जगति सुप्रतिबद्धकश्च ॥४॥
तत्पट्टभूषणमणिर्गुरुरिंद्रदिन्नः, श्रीदिन्नसूरिरथ तस्य पदाधिकारी ॥
पट्टे रराज गुरुसिंहगिरिस्तदीये, स्वामी च वज्रगुरुरस्य पदे बभूव ॥५॥
श्रीवज्रसेनसुगुरुर्बिभरांबभूव, पट्टं तदीयमथ चंद्रगुरुः पदेऽस्य । 15
सामन्तभद्रगुरुरुन्नतिमस्य पट्टे, चक्रेऽस्य पट्टमभजद्गुरुदेवसूरिः ॥६॥
प्रद्योतनस्तदनु तस्य पदे च मान-देवस्तदीयपदभृद्गुरुमानतुङ्गः ।
वीरस्ततोऽथ जयदेव इतश्च देवा-नन्दस्ततश्च भुवि विक्रमसूरिरासीत् ॥७॥
तस्माद्बभूव नरसिंह इति प्रतीतः, सूरिः समुद्र इति पट्टपतिस्तदीयः ।
सूरिः पदेऽस्य पुनरप्यजनिष्ट मान-देवस्ततश्च विबुधप्रभसूरिरासीत् ॥८॥ 20

जयानन्दः प्रट्टे श्रियमपुपदस्याऽस्य च रवि—
प्रभस्तत्पट्टेशः समजनि यशोदेवमुनिराट् ॥
ततः प्रद्युम्नाख्यो गुरुरुदयति स्मा ऽथ-पुनर—
प्यभून्मानादेवो गुरुविमलचंद्रश्च तदनु ॥९॥
तस्मादुद्योतनाख्यो गुरुरभवदितः सर्वदेवो मुनीन्द्र— 5
स्तस्माच्छ्रीदेवसूरिस्तदनु पुनरभूत् सर्वदेवस्ततश्च ॥
जज्ञाते सूरिराजौ प्रगुणगुणयशोभद्र-सन्नेमिचंद्रौ
विख्यातौ भूतलेऽस्मिन्ननिरतमुदितौ नूतनौ पुष्पदंतौ ॥१०॥
मुनिचंद्रमुनिस्ततो ऽद्भुतोऽथा-ऽजितदेवश्च तदन्तिषद्वरेण्यः ।
अपरः पुनरस्य शिष्यमुख्यो, भुवि वादी विदितश्च देवसूरिः ॥११। 10
अजितदेवगुरोरभवत्पदे, विजयसिंह इति प्रथितः क्षितौ ।
तदनु तस्य पदं दधतावुभा—वभवतां गणभारधुरंधरौ ॥१२॥
सोमप्रभस्तत्र गुरुः शतार्थी, सतांमणिः श्रीमणिरत्नसूरिः ।
पट्टे मणिः श्रीमणिरत्नसूरे—र्जज्ञे जगच्चन्द्रगुरुर्गरीयान् ॥१३॥
तेषामुभावंतिपदावभूतां, देवेंद्रसूरिर्विजयाच्च चंद्रः । 15
देवेंद्रसूरेरभवच्च विद्या—नन्दस्तथा श्रीगुरुधर्मघोषः ॥१४
श्रीधर्मघोषादजनिष्ट सोम—प्रभो ऽस्य शिष्याश्च युगप्रमेयाः ।
चतुर्दिगुत्पन्नजनावनाय, योधा इव प्राप्तविशुद्धबोधाः ॥१५॥
श्रीविमलप्रभसूरिः, परमानन्दश्च पद्मतिलकश्च ।
सूरिवरो ऽप्यथ सोम-प्रभपट्टेशश्च सोमतिलकगुरुः ॥१६॥ 20
शिष्यास्त्रयस्तस्य च चंद्रशेखरः, सूरिर्जयानन्द इतीह सूरिराट् ।
स्वपट्टसिंहासनभूमिवासवः, शिष्यस्तृतीयो गुरुदेवसुन्दरः ॥१७॥
श्रीदेवसुन्दरगुरोरथ पञ्च शिष्याः, श्रीज्ञानसागरगुरुः कुलमंडनश्च ।
चंचद्गुणश्च गुणरत्नगुरुर्महात्मा, श्रीसोमसुन्दरगुरुर्गुरुसाधुरत्नः ॥१८॥
श्रीदेवसुंदरमुनीश्वरपट्टनेतुः, श्रीसोमसुंदरगुरोरपि 'पञ्च' शिष्याः । 25
तत्र स्वपट्टवियदंगणभानुमाली, मुख्योऽतिपद्गणधरो मुनिसुंदराख्यः ॥१९॥

अन्ये श्रीजयचंद्रः, सूरिः श्रीभुवनसुंदराह्वश्च ।
श्रीजिनसुन्दरसूरि-र्जिनकीर्तिश्चेति सुरींद्राः ॥२०॥
मुनिसुंदरसूरिपट्टभानु-र्गुरुरासीदथ रत्नशेखराऽऽख्यः ।
दधदस्य'पदं'बभूवलक्ष्मी-पदयुक्सागरसूरिरीश्वराच्यैः ॥२१॥
सुमतिसाधुगुरुस्तदनुप्रभा-मुदवहद्दधदस्य पदं प्रभुः । 5
पदमदीदिपदस्य च हेमयुग्-विमलसूरिरुदात्तगुणोदयः ॥२२॥
पट्टे [तस्य] बभुवुरुग्रतपसो वैरंगिकाग्रेसराः ।
आनंदाद्विमलाऽऽह्वया गणभृतो भव्योपकारोद्धुराः ॥
ये नेत्रेभशराऽमृतद्युतिमिते (१५८२) वर्षे क्रियोद्धारत-
श्चक्रुः'स्वां'जिनशासनस्य शिखरे कीर्तिं पताकामिव ॥२३॥ 10
प्रमादाऽभ्रच्छन्नं चरणतरणिं मंदकिरणं ।
पुनश्चक्रे दीप्तं रुचिररुचिरब्दात्यय इव ॥
सृजन्पद्मोल्लासं सुविशदपथश्चन्द्रमधुरो ।
दिदीपे निष्पंकः स इह गुरुरानंदविमलः ॥२४॥
विजयदानगुरुस्तदनुद्युतिं, तपगणे ऽधिकभाग्यनिधिर्दधौ । 15
श्रुतमहोदधिरेधितसद्विधि-र्विधुयशा जिनधर्मधुरंधरः ॥२५॥
अभूत्पट्टे तस्योल्लसितविजयो हीरविजयो ।
गुरुर्गीर्वाणौघप्रथितमहिमा ऽस्मिन्नपि युगे ॥
प्रबुद्धो म्लेच्छेशो ऽप्यकबरनृपो यस्य वचसा ।
दयादानोदारो व्यतनुत महीमार्हतमयीम् ॥२६॥ 20
तदनुविजयसेनसूरिराज-स्तपगणराज्यधुरं दधार धीरः ।
अकबरनृपतेः पुरो जयश्री-र्यमवरीद्गुरुवादिवृंददत्ता ॥२७॥
जयति विजयदेवः सूरिरेतस्य पट्टे, मुकुटमणिरिवोद्यत्कीर्तिकांतिप्रतापः
प्रथितपृथुतपःश्रीः शुद्धधीरिंद्रभूतेः, प्रतिनिधिरधिदत्तो जंगमः कल्पवृक्षः ॥२८॥
तेन श्रीगुरुणाहितो निजपदे दीपोपमो ऽदीदिपत् । 25
सूरिः श्रीविजयादिसिंहसुगुरुः प्राज्यैर्महोभिर्जगत् ॥

भूमौ स प्रतिबोध्य भव्यनिवहान् स्वर्गेप्यथ स्वर्गिणः ।
प्राप्तो बोधयितुं गुरौ विजयिनि "प्रेमाण" मुत्सृज्य नः ॥२६॥
तदनुपट्टपतिर्विहितो ऽधुना, विजयदेवतपागणभूभृता ।
गुणगणप्रगुणो ऽनणुभाग्यभूः—र्विजयते गणभृद्विजयप्रभः ॥३०॥
निर्ग्रंथः श्रीसुधर्माऽभिधगणधरतः कोटिकः सुस्थिताऽऽर्या— 5
च्चंद्रः श्रीचंद्रसूरेस्तदनु च वनवासीति सामंतभद्रात् ॥
सूरेः श्रीसर्वदेवाद्वटगण इति यः श्री जगच्चन्द्रसूरे—
र्विश्वे ख्यातस्तपा ऽऽख्यो जगति विजयतामेपगच्छो गरीयान् ॥३१॥

अथ प्रशस्तिः

इतश्च—श्रीहीरविजयसूरीश्वर–शिष्यौ सोदरावभूतां द्वौ । 10
श्रीसोमविजयवाचक–वाचकवरकीर्तिविजयाख्यौ ॥३२॥
तत्र कीर्तिविजयस्य, किंस्तुमः सुप्रभावममृतद्युतेरिव ।
यत्कराऽतिशयतो|ऽजनि–ष्ट मत्प्रस्तरादपि सुधारसो ऽसकौ ॥३३॥
प्रतिक्रियां कां यदुपक्रियाणां,गरीयसीनामनुसर्तुमीशे ।
ज्ञानादिदानैरुपचर्य सो ऽयं, यैः कल्पितः कीटकणो ऽपि कुंभी॥३४॥ 15
विनयविजयनामा,वाचकस्तद्विनेयः
समहभदणुशक्तिर्ग्रंथमेनं महार्थं ॥
तदिह किमपितत्स्यात्क्षुण्णमुत्सूत्रकाऽऽद्यं ।
मयि विहितकृपैस्तत्कोविदैः शोधनीयं ॥३५॥
(रचना वि० सं०१७०८वर्षे राधोज्वलपंचम्यां जीर्णदुर्गे ॥) 20

इति लोकप्रकाशनाम्नः सप्तत्रिंशद्सर्गबन्धस्य । जिनराजकोशस्य.
श्रीसूरिपरंपरा—प्रशस्तिः ॥

# श्रीपट्टावलीसारोद्धारः

( कर्ता—उपाध्यायश्रीरविवर्द्धनगणिः )

पंडितश्री५श्रीखिमाविजयगणिगुरुभ्यो नमः ॥

( १ ) ऐंनमः श्रीवर्द्धमानतीर्थंकरः । तत्पट्टे "श्रीसुधर्म्मस्वामी" ॥ पंचाप५०द्वर्षाणि गृहस्थपर्याये त्रिंशद्वर्षाणि ३० श्रीमहावीरसेवायां श्रीवीरे मोक्षं गते च द्वादशवर्षाणि छाद्मस्थ्ये अष्टौ ८ वर्षाणि केवलिपर्याये चेति सर्वायुः शतमेकं परिपाल्य श्रीवीरात् विंशत्या वर्षैः २० सिद्धिं गतः । 5

श्रीवीरकेवलज्ञानोत्पत्तेः चतुर्दश१४वर्षे जमालीनामा प्रथमनिह्नवः १ स च निह्नवःसमुत्पन्नाध्यवसायविशेषेण भगवतीसूत्राद्यनुसारेण नराम-रतिर्यग्योनिषु प्रत्येकं पंचभवकरणे पंचदशभवान् भ्रांत्वा उपदेशमाला हेयउपादेयवृत्त्याद्यनुसारेणाप्यनंतं भवं भ्रांत्वा महाविदेहे सेत्स्यतीत्यत्रनि-र्णयः केवलीगम्यइति १ । 10

षोडश१६वर्षे तिष्यगुप्तनामा द्वितीयो निह्नव २ जातः ॥१॥

( २ ) श्रीसुधर्मस्वामिपट्टे द्वितीयः श्रीजंबूस्वामी ॥ स च षोडश-वर्षाणि १६ गृहस्थपर्याये विंशति२०वर्षाणि व्रतपर्याये चतुश्चत्वारिंश४४-द्वर्षाणि केवलिपर्याये चेति सर्वायुरशीति८०वर्षाणि परिपाल्य श्रीवीरात् चतुःषष्टि६४वर्षे सिद्धिं गतः ॥२॥ 15

( ३ ) श्रीजम्बूस्वामिपट्टे तृतीयः श्रीप्रभवस्वामी ॥ स च त्रिंश३० द्वर्षाणि गृहस्थपर्याये चतुश्चत्वारिंश४४द्वर्षाणि व्रतपर्याये एकादश११ वर्षाणि युगप्रधानत्वे चेति सर्वायुः पंचाशीति८५वर्षायुः परिपाल्य श्री-वीरात् पंचसप्तति७५वर्षातिक्रमे स्वर्गं प्राप्तः ॥३॥

( ४ ) श्रीप्रभवस्वामिपट्टे चतुर्थः श्रीशय्यंभवस्वामी ॥ स चाष्टा- 20 विंशति२८वर्षाणि गृहस्थपर्याये एकादश११वर्षाणि व्रतपर्याये त्रयोविं-

शतित्रयाणि २३ युगप्रधानत्वे सर्वायुः द्वाषष्टिः ६२ वर्षाणि परिपाल्य श्रीवीरादष्टनवती ९८ वर्षाण्यतिक्रम्य स्वर्गभाग् ॥४॥

( ५ ) श्रीशय्यंभवस्वामीपट्टे पंचमः श्रीयशोभद्रसूरिः ॥ स च द्वाविंशति२२वर्षाणि गृहे चतुर्दश१४वर्षाणि व्रते पंचाशद्वर्षाणि५०युगप्रधानत्वे सर्वायुः षडशीति८६वर्षाणि परिपाल्य श्रीवीरादष्टचत्वारिंशदधिके 5 शते १४८ वर्षातिक्रांते स्वर्गभाग् । ॥५॥

(६) श्रीयशोभद्रसूरिपट्टे षष्टौ श्रीसंभूतिविजयश्रीभद्रबाहुस्वामिनौ ॥ तत्रसंभूतिविजयः द्विचत्वारिंश४२द्वर्षाणि गृहे चत्वारिंश४०द्वर्षाणि व्रते अष्टौ वर्षाणि ८ युगप्रधानत्वे सर्वायुर्नवति९० वर्षाणि परिपाल्य स्वर्गभाग् । श्रीभद्रबाहुस्वामी तु पंचचत्वारिंश४५द्वर्षाणि गृहे सप्तदश 10 १७वर्षाणि व्रते चतुर्दश१४वर्षाणि युगप्रधानत्वे सर्वायुः षट्सप्तति७६ वर्षाणि परिपाल्य श्रीवीरात्सप्तत्यधिकशत१७०वर्षातिक्रमे स्वर्गभाग् ॥६॥

( ७ ) श्रीसंभूतिविजयश्रीभद्रबाहुस्वामीनोः पट्टे सप्तमः श्रीस्थूलभद्रस्वामी ॥ स च त्रिंशद्वर्षाणि३०गृहे चतुर्विंशति२४वर्षाणि व्रते पंचचत्वारिंश४५द्वर्षाणि युगप्रधानत्वे सर्वायुः नवनवति९९वर्षाणि परि- 15 पाल्य श्रीवीरात् पंचदशाधिकशतद्वय२१५वर्षातिक्रमे स्वर्गभाग् ॥

अत्रांतरे वीरात् चतुर्दशाधिकद्विशत२१४वर्षे आषाढाचार्यादव्यक्तनामा तृतीयः निह्नवः ॥७॥

( ८ ) श्रीस्थूलिभद्रस्वामिपट्टे अष्टमौ श्रीआर्यमहागिरि-श्रीआर्यसुहस्ती सूरी ॥ तत्र आर्यमहागिरिः त्रिंशद्व३०र्षाणि गृहे चत्वारिंश४०- 20 द्वर्षाणि व्रते त्रिंश३०द्वर्षाणि युगप्रधानत्वे सर्वायुः शतमेकं १०० परिपाल्य स्वर्गभाग् ॥

श्रीआर्यसुहस्तिसूरिः त्रिंश३०द्वर्षाणि गृहे चतुर्विंशति२४वर्षाणि व्रते षट्चत्वारिंशद्४६वर्षाणि युगप्रधानत्वे सर्वायुः शतमेकं १०० परिपाल्य श्रीवीरात् एकनवत्यधिकशतद्वये २९१ स्वर्गभाग् ॥ परं श्रीआ- 25 चार्यसुहस्तिसूरिणा पूर्वभवे द्रमकीभूतोपि संप्रतिराजाजीवः प्रव्राज्य त्रिपं-

डाधीपत्यं प्रापितः। तथा श्रीआचार्यसुहस्तिसूरिदीक्षितश्रीअवंतीसुकुमाल-मृतस्थाने तत्सुतेन देवकुलं कारितं तस्य महाकाल इति नाम संजातं ॥

तथा श्रीवीरात् विंशत्यधिकवर्षे शतद्वये २२० अश्वमित्रात्सामुछेदिकनामा चतुर्थोनिह्नवः। अष्टाविंशत्यधिक वर्षशतद्वये गंगनामा द्विक्रियवादी पंचमो निह्नवः ॥८॥ 5

( ९ ) श्रीआर्यमहागिरि-श्रीआर्यसुहस्तिसूरिपट्टे नवमौ श्रीसुस्थित श्रीसूप्रतिबद्धसूरी ॥ काकंदिकनगर्यां जातत्वात् कोटिशःसूरिमंत्रजापाच्च एतो कोटिककाकंदिकतयाख्यातौ ॥ आभ्यां "कौटिक" नामा गच्छो ऽभूत् ।

अयं भावः श्रीसुधर्म्मस्वामिनोऽष्टसूरीन् यावन्निर्ग्रंथा साधवो अनगारा इतिसामान्यार्थाभिधायिन्याख्याभूत् नवमे पट्टे कौटिका इति विशे- 10 षार्थावबोधकं द्वितीयं नाम प्रादुर्भूतं, अत्रांतरे प्रज्ञापनासूत्रकृत्श्रीआर्यश्यामाचार्यः श्रीवीरात् षट्सप्तत्यधिकशतत्रये ३७६ वर्षे स्वर्गभाग् ॥९॥

( १० ) श्रीसूस्थित-सुप्रतिबद्धपट्टे दशमः श्रीइद्रदिन्नसूरिः ॥

अत्रांतरे श्रीवीरात्पंचाशदधिकवर्षचतुःशता४५०तिक्रमे गर्द्दभिल्लोच्छेदकारी श्रीकालिकसूरिः ॥ 15

तथा श्रीसिद्धसेनदिवाकरोपि जातो येनोज्जयिन्यां महाकालप्रासादे रुद्रलिंगस्फोटनं कृत्वा कल्याणमंदिरस्तवनेन श्रीपार्श्वनाथबिंबं प्रकटीकृत्य श्रीविक्रमादित्यराजापि प्रतिबोधितः श्रीवीरनिर्वाणात् सप्ततिवर्षाधिकशतचतुष्टये४७०ऽतिक्रमे श्रीविक्रमादित्यराज्यं संजातं ॥१०॥

(११) श्रीइन्द्रदिन्नसूरिपट्टे एकादशः श्रीदिन्नरत्नसूरिः ॥११॥ 20

(१२) श्रीदिन्नरत्नसूरिपट्टे द्वादशः श्रीसीहगिरिः ॥१२॥

(१३) श्रीसीहगिरीसूरिपट्टे त्रयोदशः श्रीवज्रस्वामी ॥ स च वज्र शाखोत्पत्तिमूलं दशपूर्वविदांमपश्चिमः अष्टौ८वर्षाणि गृहे चतुश्चत्वारिंशद् ४४ वर्षाणि व्रतेः षट्त्रिंशद्वर्षाणि युगप्रधानत्वे सर्वायुरष्टाशीति ८८ वर्षाणि परिपाल्य श्रीवीरात् चतुरशीतिवर्षाधिकपञ्चशतवर्षाणि ५८४ अति- 25 क्रमे स्वर्गभाग् ॥ तथा श्रीवीरादष्टचत्वारिंशदधिकपञ्चशत५४८वर्षांते त्रैरा-

:शिकमतजित् "श्रीसुगुप्तसूरिः" स्वर्गभाग् ॥

तथा श्रीवीरात् सपादपंचशत५२५वर्षांते "श्रीशत्रुंजयतीर्थोच्छेदः" । सप्ततिवर्षाधिकपञ्चशत५७०(५७८)वर्षे जावडकृतोद्धारः ॥१३॥

(१४) श्रीवज्रसेनसूरिपट्टे चतुर्दशः "श्रीवज्रदिन्नसूरिः" (वज्रसेनसूरिः) ॥ स च नववर्षाणि गृहे षोडशाधिकशतवर्षाणि व्रते त्रीणि वर्षाणि युगप्रधानत्वे 5 सर्वायुसाष्टाविंशतिशतं परिपाल्य वीरात् विंशत्यधिक षट्शतवर्षांते स्वर्गभाग् । नवाधिकषट्शतवर्षांते६०६दिगम्बरोत्पत्तिः ॥१४॥

(१५) श्रीवज्रसेनसूरिपट्टे पंचदशः "श्रीचंद्रसूरिः" तस्मात् "चंद्रगच्छ" इति तृतीयं नाम प्रादुर्भूतं ॥१५॥

(१६) श्रीचन्द्रसूरिपट्टे षोडशः "श्रीसामन्तभद्रसूरिः" स च वैराग्य- 10 वान् निर्ममतया देवकुले वनादिष्ववस्थानात् लोके वनवासीप्युक्तस्तस्माच्चतुर्थं नाम "वनवासी"तिप्रादुर्भूतं ॥१६॥

(१७) श्रीसामन्तभद्रसूरिपट्टे सप्तदशः "श्रीवृद्धदेवसूरि" ॥१७॥

(१८) श्रीवृद्धदेवसूरिपट्टे अष्टादशः "श्रीप्रद्योतनसूरिः" ॥१८॥

(१९) श्रीप्रद्योतनसूरिपट्टे एकोनविंशतितमः "श्रीमानदेवसूरिः"१९ 15

(२०) श्रीमानदेवसूरिपट्टे विंशतितमः "श्रीमानतुङ्गसूरिः" ॥

येन श्रीभक्तामरस्तवनं कृत्वा वाणमयूरपण्डितविद्याचमत्कृतो ऽपि क्षितिपतिः प्रतिबोधितः ॥२०॥

(२१) श्रीमानतुङ्गसूरिपट्टे एकविंशतितमः "श्रीवीरसूरिः" ॥

स च श्रीवीरात्सप्तत्यधिकसप्तशतवर्षे विक्रमात् त्रिंशतिवर्षे श्रीनाग- 20 पूरे श्रीनेमिनाथप्रतिष्टाकृत् ॥२१॥

(२२) श्रीवीरसूरिपट्टे द्वाविंशतितमः "श्रीजयदेवसूरिः" ॥२२॥

(२३) श्रीजयदेवसूरिपट्टे त्रयोविंशतितमः श्रीदेवानंदसूरिः ॥

अत्रांतरे श्रीवीरात् पंचचत्वारिंशदधिकाष्टशतवर्षान्ते ८४५ वलभीपुरभंगः । द्व्यशीत्यधिकाष्टशतवर्षातिक्रमे चैत्यस्थीतिः ॥२३॥ 25

(२४) श्रीदेवानंदसूरिपट्टे चतुर्विंशतितमः श्रीविक्रमसूरिः ॥२४॥

( २५ ) श्रीविक्रमसूरिपट्टे पंचविंशतितमः श्रीनरसिंहसूरिः ॥२५॥

( २६ ) श्रीनरसिंहसूरिपट्टे षड्विंशतितमः श्रीसमुद्रसूरिः ॥२६॥

(२७) श्रीसमुद्रसूरिपट्टे सप्तविंशतितमः श्रीमानदेवसूरिः । श्रीवीरात् वर्षे सहस्रे गते सत्यमित्रे "पूर्वव्यवच्छेदः" श्रीवीरात् त्रिनवत्यधिकनवशत ९९३ वर्षातिक्रमे श्रीकालिकसूरिभिः पंचमीतः चतुर्थ्यां पर्यूषणापर्वानितं श्रीवीरात्पंचपंचाशदधिकसहस्रवर्षे । विक्रमतः पंचाशीत्यधिकपंचशते५८५ याकिनीसूनुः श्रीहरिभद्रसूरिः स्वर्गभाग् ॥२७॥

(२८) श्रीमानदेवसूरिपट्टे अष्टाविंशतितमः श्रीविबुधप्रभसूरिः २८

(२९) श्रीविबुधप्रभसूरिपट्टे एकोनविंशतितमः श्रीजयानंदसूरिः२९

( ३० ) श्रीजयानंदसूरिपट्टे त्रिंशत्तमः श्रीवीरप्रभसूरिः ॥ श्रीवीरा- 10 न्नवत्यधिकैकादशशतवर्षे श्रीउमास्वातियुगप्रधानः । श्रीवीरात् पंचाशद- धिकैकादशशतवर्षे जिनभद्रगणियुगप्रधानः ॥३०॥

( ३१ ) श्रीवीरप्रभसूरिपट्टे एकत्रिंशत्तमः श्रीयशोदेवसूरिः ॥

श्रीवीरात् द्विसप्तत्यधिकद्वादशशतवर्षे विक्रमात् संवत् ८०२ वर्षे वनराजचापोत्कटेन श्रीअणहिल्लपुरपाटणस्थापना कृता । विक्रमतः 15 सं०८०० वर्षे भाद्रपदशुक्लातृतीयायां आमराजाप्रतिबोधकः श्रीबप्पभट्ट- सूरिस्तस्यजन्म, स च विक्रमतः संवत् ८९५ वर्षे स्वर्गभाग् ॥३१॥

( ३२ ) श्रीयशोदेवसूरिपट्टे द्वात्रिंशत्तमः श्रीप्रद्युम्नसूरिः ॥३२॥

( ३३ ) श्रीप्रद्युम्नसूरिपट्टे त्रयस्त्रिंशत्तमः श्रीमानदेवसूरिः ॥ उप- धानग्रंथकर्ता ॥३३॥ 20

( ३४ ) श्रीमानदेवसूरिपट्टे चतुस्त्रिंशत्तमः श्रीविमलचंद्रसूरिः ३४

( ३५ ) श्रीविमलचंद्रसूरिपट्टे पंचत्रिंशत्तमः श्रीउद्योतनसूरिः । श्रीवीरात् चतुःषष्ट्यधिकचतुर्दशशतवर्षे १४६४ विक्रमात् सं० चतुर्न- वत्यधिकनवशत९९४वर्षे निजपट्टे सूरिः अर्बुदाचलवटस्य छायामुपविष्टः सन् श्रीसर्वदेवसूरिप्रभृतीन् अष्टौ सूरीन् स्थापितवान् । वटस्याधः सूरिपद- 25 करणाद् "वडगच्छ" इति पंचमं नाम लोकप्रसिद्धं, प्रधानशिष्यसंततत्यादिगुणैः

प्रधानचरितैश्च "बृहद्गच्छ" इत्यपि नाम ।

अत्रांतरे विमलमंत्री श्रीअर्बुदाचलोपरितीर्थप्रासादकृदभूत् ॥३५॥

( ३६ ) श्रीउद्योतनसूरिपट्टे षट्त्रिंशत्तमः श्रीसर्वदेवसूरिः ॥

तथा श्रीविक्रमात् एकोनत्रिंशदधिकदशशतवर्षे धनपालपंडितेन देशीनाममाला कृता । विक्रमात् षण्णवत्यधिकसहस्रवर्षे श्रीउत्तराध्ययनवृत्तिकर्त्ता थिरापद्रगच्छीयवादिवेतालशांतिसूरिः स्वर्गभाग् ॥३६॥ 5

( ३७ ) श्रीसर्वदेवसूरिपट्टे सप्तत्रिंशत्तमः श्रीदेवसूरिः ॥३७॥

( ३८ ) श्रीदेवसूरिपट्टे ऽष्टत्रिंशत्तमः पुनः श्रीसर्वदेवसूरिः ॥३८॥

( ३९ ) श्रीसर्वदेवसूरिपट्टे एकोनचत्वारिंशत्तमौ श्रीयशोभद्रसूरिः श्रीनेमिचंद्रसूरिः ॥ तथा विक्रमात् पंचत्रिंशदधिकैकादशशतवर्षे नवांगवृत्तिकृत् "श्रीअभयदेवसूरिः" स्वर्गभाग् ३९ । 10

( ४० ) श्रीयशोभद्रसूरिश्रीनेमिचंद्रसूरिपट्टे चत्वारिंशत्तमः श्रीमुनिचंद्रसूरिः ॥ स च जावज्जीवं सौवीरपायी प्रत्याख्यातसर्वविकृतिकः श्रीअनेकांतजयपताकापंजिकोपदेशपदवृत्त्यादिकर्त्ता, तार्किकशिरोमणिः संवत् ११७८ वर्षे स्वर्गभाग् ॥ 15

अत्र च संवत् ११५९ वर्षे पौर्णमियकगच्छोत्पत्तिः तत्प्रतिबोधाय च श्रीमुनिचंद्रसूरिभिः पाक्षिकसप्ततिः कृता ॥

तथा श्रीमुनिचंद्रसूरिशिष्यैः श्रीवादिदेवसूरिस्तैः श्रीमदणहिल्लपूरपत्तने श्रीसिद्धराजजयसिंहसभायां वादे कुमुदचंद्राचार्यं निर्जित्य श्रीपत्तननगरे दिगंबरप्रवेशो निवारितः तथा सं० १२०४ वर्षे फलवर्द्धिग्रामे 20 चैत्यबिंबयोः प्रतिष्ठा कृता, तथा आरासणे च श्रीनेमिनाथप्रतिष्ठाकृता, तथा ८४००० प्रमाणः स्याद्वादरत्नाकरनाना प्रमाणग्रंथः कृतः, स च वादिदेवसूरिः सं० १२२६ वर्षे स्वर्गभाग् ।

तस्मिन्समये श्रीदेवचंद्रसूरिशिष्यः त्रिकोटिग्रंथकर्त्ता श्रीहेमचंद्रसूरिः तस्य च सं० ११४५ वर्षे जन्म सं० ११५० वर्षे व्रतं सं० ११६६ वर्षे 25 सूरिपदं सं० १२२९ वर्षे स्वर्गगतिः ॥४०॥

(४१) श्रीमुनिचंद्रसूरिपट्टे एकचत्वारिंशत्तमः "श्रीअजितदेवसूरिः" ॥४१॥

तत्समये सं०१२०४वर्षे "खरतरमतोत्पत्तिः" संवत् १२१३ वर्षे "आंचलकमतोत्पत्तिः" संवत् १२२६ वर्षे "सार्द्धपौर्णमीयकमतोत्पत्तिः" संवत् १२५० वर्षे "आगमियकमतोत्पत्तिः" वीरात् द्विनवत्यधिकषोडश 5 शत१६९२वर्षे वाहडदेमंत्रिकृतोद्धारः ॥४१॥

(४२) श्रीअजितदेवसूरिपट्टे द्विचत्वारिंशत्तमः "श्रीविजयसिंहसूरिः"

(४३) श्रीविजयसिंहसूरिपट्टे त्रिचत्वारिंशत्तमौ "श्रीसोमप्रभसूरिः" "श्रीमणिरत्नसूरिः" ॥४३॥

(४४) श्रीमणिरत्नसूरिपट्टे चतुश्चत्वारिंशत्तमः "श्रीजगच्चंद्रसूरिः" 10

स च क्रियापरायणः सन् "हीरलाजगच्चंद्र"सूरिरिति ख्यातिभाग् जातः तथा यावज्जीवमाचाम्लतपोभिग्रही द्वादशवर्षे तपाविरुदमाप्तवान्, ततो लोके पष्ठं नाम संवत्१२८५वर्षे "तपा" इति प्रसिद्धं जातं ॥

तथा च निर्ग्रंथ १ कोटिक २ चंद्र ३ वनवासि ४ वडगच्छ ५ तपा ६ इति पण्णां नाम्नां प्रवृत्तिहेतवः आचार्याः क्रमेण श्रीसुधर्मस्वामि १ श्रीसुस्थितसूरि २ चंद्रसूरि ३ श्रीसामंतभद्रसूरि ४ सर्वदेवसूरि ५ श्रीजगच्चंद्रसूरि ६ नामानि षट् आसन् ॥४४॥ 15

(४५) श्रीजगच्चंद्रसूरिपट्टे पंचचत्वारिंशत्तमः "श्रीदेवेंद्रसूरिः" । स च चिरकालं मालवके एव विहृतवान् ॥ क्रमेण श्रीदेवेंद्रसूरयः श्रीस्थंभतीर्थे समायाताः तत्र च श्री विजयचंद्रसूरयः एकस्यां पौषधशालायां लोकाग्रहात् द्वादश वर्षाणि पूर्वं स्थितवंतः अन्नन्यादिकृत्यमपि गुर्वाज्ञामंतरेणैव कृतवंतश्च, तथामालवदेशादागतानां श्रीदेवेन्द्रसूरीणां वंदनार्थमपि नायाताः, ततो लोकैश्च वृद्धशालायां स्थितत्वात् श्रीविजयचंद्रसूरिसमुदायस्य "वृद्धशालिक"इति प्रोक्तं, तथा लघुशालायां स्थितत्वात् श्रीदेवेन्द्रसूरिनिश्रितसमुदायस्य "लघुशालिक"इति ख्यातिर्जाता । 20 25

तत्समये मंत्रिवस्तुपालेन श्रीदेवेन्द्रसूरीणां बहुमानं कृतं, क्रमेण विहारं कुर्वंतश्च श्रीसूरयः प्रल्हादपुरनगरे समायाताः, तत्र च संवत् १३२३ वर्षे विद्यानंदसूरिं स्वपदे संस्थाप्य पुनरपि मालवदेशे विहृतवंतः तत्र मालवके एव सं० १३२७ वर्षे श्रीदेवेन्द्रसूरयो दिवं गताः ।

तदा दैवयोगाद्विद्यापुरे श्रीविद्यानंदसूरयोऽपि त्रयोदशदिनांतरिता 5 स्वर्गभाजः ॥ तथा श्रीगुरूणां स्वर्गगमनं श्रुत्वा सं०भीमेन मतांतरे सोनीसंग्रामेण द्वादशवर्षाणि धान्यं त्यक्तं ॥४५॥

( ४६ ) श्रीदेवेन्द्रसूरिपट्टे षट्चत्वारिंशत्तमः श्रीधर्मघोषसूरिः ॥ येन मंडपाचले सा० पेथडदेवः सौख्यभाग् कृतः सोऽपिमंडपेशप्राधान्यं प्राप्तस्तेन ८४ श्रीजिनप्रसादाःसप्तज्ञानकोशाश्च कारिताः षट्पंचाशत् स्वर्ण- 10 धटीव्ययेनेंद्रमाला श्रीशत्रुंजयोपरि परिहिता, तथा सां०पेथडदेवः द्वात्रिंशद्वर्षीयोपि ब्रह्मचार्यभूत् तस्य पुत्रो झांझणदेनामा एक एवासित् येन च श्रीशत्रुंजयोज्जयंतगिर्य्योः शिखरे द्वादशयोजनप्रमाणस्वर्णरूप्यमयः एक एव ध्वजः समारोपितः तथा येन मंडपाचले जिर्णटंकानां षट्त्रिंसत्सहस्रैः श्रीगुरूणां प्रवेशोत्सवः कृतः ॥ 15

तथा एकदा श्रीगुरुभिः काभिश्चित् दुष्टस्त्रिभिः कार्मणोपेता वटका साधूनां विहरिताः भूपीठे त्याजिता प्रभाते ते पाषाणमया अभवन् तदा वासाभिमंत्र्यार्पितपट्टकासनस्थादुष्टस्त्रियः स्थम्भिताः । ताश्च कृपया मुक्ताः, एवं महा प्रभावकाः श्रीगुरवः संवत् १३५७ वर्षे दिवं गताः ॥४६॥

(४७) श्रीधर्मघोषसूरिपट्टे सप्तचत्वारिंशत्तमः श्रीसोमप्रभसूरिः ॥ 20 तस्य च संवत्१३१०वर्षे जन्म संवत्१३२१वर्षे व्रतं संवत् १३३२ वर्षे सूरिपदं । यः कंठगतैकादशांगसूत्रार्थः समासीत्, येन जलबहुलकुंकुणदेशे ष्यप्कायविराधनाभयात् मरुदेशे शुद्धजलदौर्लभ्याच्च साधूनां विहारः प्रतिषिद्धः क्रमात् संवत् १३७३ वर्षे ते श्रीसूरयो दिवं गताः ।

( ४८ ) श्रीसोमप्रभसूरिपट्टे अष्टचत्वारिंशत्तमःश्रीसोमतिलकसूरिः 25 तस्य च संवत् १३५५ वर्षे जन्म संवत् १३६९ वर्षे दीक्षा सं० १३७३ वर्षे सूरिपदं संवत् १४२४ वर्षे एकोनसप्ततिवर्षायुः परिपाल्य स्वर्गः ॥४८॥

(४६) सोमतिलकसूरिपट्टे एकोनपंचाशत्तमः "श्रीदेवसुंदरसूरिः" तस्य च सं०१३६६वर्षे जन्म, सं०१४०४वर्षे व्रतं, सं०१४२० वर्षे सूरिपदं। श्रीदेवसुंदरसूरीणां च श्रीज्ञानसागरसूरयः श्रीकुलमंडनसूरयः श्रीगुणरत्नसूरयः श्रीसोमसुंदरसूरयः श्रीसाधुरत्नसूरयः अनेकग्रंथकर्तारः शिष्याश्चाऽभवन् ४६। 5

(५०) श्रीदेवसुंदरसूरिपट्टे श्रीसोमसुंदरसूरिः॥ तस्य च संवत्-१४३०वर्षे जन्म, सं०१४३७वर्षे व्रतं, सं०१४५०वर्षे वाचकपदं १४५७ वर्षे सूरिपदं॥ तथा १८शतसाधुपरिकरितं सत्क्रियापरं श्रीगुरुं विलोक्य रुष्टैर्द्रव्यलिंगिभिरेकः शस्त्रधारिपुमान् पंचशतद्रव्यदानेन श्रीसूरिवधार्थं उदीरितः स च दुर्धिया वसतौ प्रविष्टो यावदनुचितकरणाय 10 यतते तावच्चंद्रोद्योते जाते निद्रालुभिरपि श्रीगुरुभिः रजोहरणेन प्रमृज्य-पार्श्वं परावर्तितं तत्दृष्ट्वा ऽहोनिद्रायामपि क्षुद्रप्राणिषु कृपापरमेनं विराध्य कस्यां गतौ मे गतिरिति विचारणया परलोकभीतो गुरुपादयोर्निपत्य क्षमध्वं-मेऽपराधमिति वचसा गुरुं प्रबोध्य निजव्यतिकरं प्रोक्तवान्, सोपि श्रीगुरु-भिस्तथोदीरितो यथा स प्रवर्जितः इति वृद्धवचः। स च राणकपुरे श्रीधरण- 15 विहारोपदेशकः संयममाराध्य सम्वत् १४९९ वर्षे स्वर्गभाक् ५०।

(५१) श्रीसोमसुंदरसूरिपट्टे एकपंचाशत्तमः "श्रीमुनिसुंदरसूरिः" येनाष्टोत्तरशतहस्तमितो लेखः श्रीगुरूणां प्रेषितः, तथा च अष्टोत्तरशतवतु-लिकानादोपलक्षकः बाल्येपि सहस्रावधानधारकः सप्रभावं संतिकर मितिस्तवकरणेन योगिनीकृतमार्युपद्रवनिवारकः तस्य सम्वत् १४३६ वर्षे 20 जन्म, सं०१४४३ वर्षे व्रतं सम्वत् १४६६ वर्षे वाचकपदं सम्वत् १४७८ वर्षे ३२००० टंकव्ययेन वृद्धनगरीय सं०देवराजेन सूरिपदं कारितं। सम्वत् १५०३ वर्षे स्वर्गः॥५१॥

(५२) श्रीमुनिसुंदरसूरिपट्टे द्विपंचाशत्तमः "श्रीरत्नशेखरसूरिः"॥ तस्य च संवत् १४५७वर्षे जन्म, संवत्१४६३वर्षे व्रतं, सं०१४८३वर्षे 25 पंडितपदं सं०१४९३वर्षे वाचकपदं सं०१५०२वर्षे सूरिपदं सं०१५१७

वर्षे स्वर्गः तदानीं लुङ्काख्यातो लेखकात् संवत्१५०८वर्षे श्रीजिनप्रति-
मोत्थापनपरं "लुङ्कामतं" प्रवृत्तं, तद्वेपधरस्तु सं०१५३८वर्षे जातः,
तत्प्रथमो वेपधारी ऋषिभाणाख्यो ऽभूदिति ॥५२॥

(५३) रत्नशेखरसूरिपट्टे त्रिपंचाशत्तमः श्रीलक्ष्मीसागरसूरिः ॥

तस्य च सं०१४६४वर्षे जन्म, सं०१४७०वर्षे दीक्षा सं०१४९६- 5
वर्षे पंडितपदं सं०१५०१ वर्षे वाचकपदं सं०१५०८वर्षे सूरिपदं सं०१५१७-
गच्छनायकपदं ॥५३॥

(५४) श्रीलक्ष्मीसागरसूरिपट्टेचतुष्पंचाशत्तमः "श्रीसुमतिसाधुसूरिः"

(५५) श्रीसुमतिसाधुसूरिपट्टे पंचपञ्चाशत्तमः "श्रीहेमविमलसूरिः"
यः क्रियाशिथिलसाधुसमुदाये वर्तमानोपि साध्वाचारं नातिक्रांतः तथाऋ- 10
पिहानर्षिश्रीपतिऋषिगणपतिप्रमुखा लुङ्कामतमपास्य श्रीहेमविमलसूरिपार्श्वे-
प्रव्रज्य तन्निश्रया चारित्रभाजो बभुवांसः। तथा संवत्१५६२वर्षे संप्रति
साधवो न दृगपथमायांतीत्यादिप्ररूपणपरं"कटुकनाम्ना मतं" प्रवर्तितं, गृह-
स्थात् त्रिस्तुतिकमतवासितात् कटुकमतोत्पत्तिः। तथा १५७०वर्षे लुङ्का-
मतान्निर्गत्य विजयवेपधारिणा विजामतिनाम्ना मतं प्रवर्तितं। तथा संवत्- 15
१५७२ वर्षे नागोरीतपागणादुपाध्यायपार्श्वचन्द्रेण स्वनाम्ना मतं प्रकटितं॥५५॥

(५६) श्रीहेमविमलसूरिपट्टे षट्पंचाशत्तमः "श्रीआणंदविमल-
सूरिः" तस्य च संवत्१५४७वर्षे ईलादुर्गे जन्म सं०१५५२वर्षे व्रतं
सं०१५७०वर्षे सूरिपदं। यः क्रियाशिथिलबहुसाधुजनपरिकरितोपि
संवेगरंगभावितमतिः उत्सुत्रप्ररुपणापरायणजनसमूहं समालोक्य करुणा- 20
रसावलिप्तमना गुर्वाज्ञया कतिचित् संविज्ञसाधुसहायः सं०१५८२वर्षे शिथि-
लाचारपरिहाररूपक्रियोद्धारयानपात्रेण तं भव्यजनं समुद्धृतवान्।

यो वादे जयी स नगरादौ स्थास्यति नान्य इतिसुराष्ट्राधिपतिनामांकितं
लेखमादाय सुराष्ट्रे साधुविहारनिमित्तं यदियश्रावकः सुरत्राणदत्तपर्य्यस्तिका
रोहः पातसाहिप्रदत्त"मल्लिकश्रीनगदल"विरुदः सा०तूणसिंहः श्रीआणंद- 25
विमल सूरीणां विज्ञप्तिं विधाय पन्यासजगर्षिप्रमुखसाधुविहारं कारितवान्।

तथा जेसलमेर्वादिमरुभूमौ जलदौर्लभ्यात् दुष्करोयमिति श्रीसोमप्रभसूरिभिर्विहारः पूर्वं सम्प्रतिपिद्ध आसित् सोपि विहारः कुमतव्याप्तिभिया जनानुकंपया च भुयो लाभहेतवे पुनरप्यनुज्ञातः श्रीसूरिणा तत्रापि प्रथमं वैराग्यनिधि निस्पृहावधिर्जावज्जीवंजघन्यतोपि षष्ठतपोऽभिगृही पारणकेप्याचाम्लादितपोविधायी उपाध्याय श्रीविद्यासागरगणिर्विहृतवान् तेन च 5 जेसलमेर्वादौ खरतरान् मेवातदेशे च वीजामतिप्रभृतीन् मरुदेशादौ लुम्पकादीन् प्रतिबोध्य वीरग्रामे पासचंद्रव्युद्ग्राहितं जनं च प्रतिबोध्य भूयान् जनो जैनधर्मं प्रापितः,एवं मालवकादिबहुदेशेषु विहृत्य वैराग्यवासिनो जनाः कृताः। तथाक्रियोद्धारकरणानन्तरं च श्रीआणंदविमलसूरयः चतुर्दशवर्षाणि जघन्यतोपि नियततपोविशेषं विहाय षष्ठतपो अभिग्रहेण 10 चतुर्थषष्ठाभ्यां विंशतिस्थानकाराधनाद्यनेकविकृष्टतपःकारिणश्च सं० १५९६ वर्षे चैत्रशुदिसप्तम्यामाजन्मातिचाराद्याआलोच्य नवभिरुपवासैरहमदावादनगरोपकंठे निजां पूरे (?) स्वर्गं प्राप्तः ॥५६॥

(५७) श्रीआणंदविमलसूरिपट्टे सप्तपंचाशत्तमः "श्रीविजयदानसूरिः" येन स्थंभतीर्थमहानगरेषु महामहोत्सवपुरस्सरमनेकजिनबिंबशतानि 15 प्रतिष्ठितानि यदुपदेशेन पातसाहिमुहिम्मुदमान्येन मंत्रिगलराजेन पाण्मासिकां शत्रुंजयमुक्तिं कारयित्वा सकलनगरसङ्घसहितेन श्रीशत्रुंजययात्रा कृता, तथा यदुपदेशपरायणैः गंधारीयसा०रामजी—अहम्मदावादसत्कसं० कुंअरजीप्रमुखैः श्राद्धैः श्रीशत्रुञ्जयोज्जयन्तगिर्योः जीर्णोद्धारो देवकुलिकाचतुर्मुखादयः कारिताः। तथा यः श्रीसूरिः जावज्जीवं घृतातिरिक्तविकृतिपंचप- 20 रिहारी अनेकवारैकादशांगपुस्तकशुद्धिकारः सर्वजनप्रसिद्धोभूत् तस्य च सं० १५५३ वर्षे जांमलाख्यनगरे सा० भामोसा—मातृभ्रमादेगृहे जन्म, त्रयो भ्रातरः, भागिनेयो विजयः × × लक्ष्मणकुंअर, सं० १५६२ वर्षे दीक्षा सं० १५८७ वर्षे सूरिपदं, संवत् १६२२ वर्षे वडालीनगरेऽनशनेन स्वर्गः ५७

(५८) श्रीविजयदानसूरिपट्टे अष्टपंचाशत्तमः "श्रीहीरविजयसूरिः" सं० 25 १५८३ वर्षे प्राह्लादनपुरवास्तव्यउकेशज्ञातीयसा०कुंअरजीभार्यानाथीगृहे

जन्म, संवत्१५९६वर्षे कार्तिकवदि२दिने दीक्षा,सं०१६०७नारदपूर्यां पंडित पदं सं०१६०८वर्षे माघशुदि ५ दिने नारदपूर्यां वाचकपदं, सं० १६१० वर्षे सीरोहीनगरे सूरिपदं। तथा चैरनेकनगरेषु सहस्रशो बिंबानि प्रतिष्ठितानि तथा अहम्मदावादनगरे ऋषिर्मेघजीनामा स्वयं मतं परित्यज्य पंचविंशति- मुनिभिः सह श्रीगुरुचरणसेवापरो जातः। तथा श्रीगुरवः पातसाहि अक- 5 ब्बरेण स्वनामांकितं फुरमानं प्रेष्य गंधारबंदिरात् श्रीआगरानगरासन्न फत्तेपुरनगरे समाहूताः सन्तः विहारं कुर्वतः क्रमेण सम्वत् १६३९ वर्षे ज्येष्ठवदि१३त्रयोदशीदिने तत्र सम्प्राप्ता श्रीसाहिना समं मिलिताः साधिकप्रहरं यावत्तत्र धर्म्मगोष्टीं कृत्वा श्रीसाहिना अनुजाता सन्तो महताडम्बरेणोपाश्रये समायाताः। तदानीं सकलोपि 10 लोकः श्रीहीरसूरिसेवापरो जातः। तस्मिन् वर्षे श्रीआगरानगरे चा- तुर्मासकं कृतं तदनुश्रीगुरुभिः श्रीशोरीपुरयात्रां च कृत्वा आगरानगरे सा० मानसिंघकल्याणमल्लकारितश्रीचिंतामणिपार्श्वनाथबिंबं प्रतिष्ठितं पुन- रपि फत्तेपुरनगरे समागत्य श्रीसूरयः पातसाहिना साकं मिलिताः तदवसरे धर्मवार्तया रंजितः पातसाहिः द्वादशदिवसामारिसत्कं फुरमानं स्वनामां- 15 कितं श्रीगुरूणां दत्तवान्, तदा च श्रीजिनधर्मोन्नतिर्महती जाता। तदवसरे श्रीमेडतीयसदारंगेण याचकेभ्यो मूर्तिमद्गजदानद्विपंचाशदश्वदानादि- ना दील्लिमंडले श्राद्धानां प्रतिगृहं सेरद्वयप्रमाणखंडलंभनिकाकरणादि- ना च श्रीगुरूणां प्रतिष्ठा महती संजाता। तथा प्रथमं चातुर्मासीकं श्रीआगरा- नगरे द्वितीयं फत्तेपुरे तृतीयं अभिरामाबादे, चतुर्थंपुनरपि आगरानगरे 20 एवं चतुर्मासकचतुष्टयं तत्र देशे कृत्वा, गुर्जरदेशसंघाग्रहात् मेडतादिनगरे विहारं कुर्वन्तो नागोरनगरे च चतुर्मासकं कृत्वा क्रमेण सूरयः श्रीसीरोही- नगरे समागताः तत्रापि प्रतिष्टाद्वयं श्रीअर्बुदाचलतीर्थयात्रां च कृत्वा रा- जश्रीसूलतानजीकस्याग्रहवशात् श्रीसीरोहीनगरे चातुर्मासीकं स्थिताः। तदनु विहारं कुर्वंतः श्रीपाटणनगरे चातुर्मासकं चक्रुः 25

श्रीहीरसूरयः क्रमेण भव्यजीवान् प्रतिबोध्य च श्रीदीवबंदीरास न्नउनानगरे संवत् १६५२ वर्षे भाद्रवाशुदि ११दिने स्वर्गं प्राप्ताः॥५८॥

(५९) हीरविजयसूरिपट्टे एकोनषष्टितमः "श्रीविजयसेनसूरिः" तस्य च संवत् १६०४ वर्षे नारदपूर्यां ऊकेशज्ञातीयसा० कमाभार्याकोडमदेगृहे जन्म, संवत् १६१३ वर्षे दीक्षा, सं० १६२८ वर्षे पंडितपदं, सं० १६२८ वर्षे फाल्गुन शुक्ल ७ दिने श्रीअहमदावाद नगरे उपाध्याय पदज्ञानपूर्वकं सूरिपदं । तैश्च सं० १६३२ वर्षे चांपानेरदुर्गे प्रतिष्ठा कृता, तथा श्रीसूरतिबंदरे श्रीभूषणनामा दिगंबराचार्यो निर्जितः ॥

तथा श्रीहीरविजयसूरिषु विद्यमानेषु आचार्यगुणगणानाकर्ण्य पातसाहिश्रीअकब्बरः श्रीआचार्यान् श्रीलाहोरनगरे समाकार्य श्रीहीरसूरीणांश्च कुशलप्रश्नं प्रपृच्छ, तत्र च श्रीसूरिवचनचातुरीरंजितः श्रीसाहिः श्रीसूरीणां "कालिसरस्वती" बिरुदं दत्तवान् । श्रीसाहेरत्याग्रहात् चातुर्मासकद्वयं विधाय शरीरवाधावशात् श्रीहीरसूरिभिराकारिता श्रीसाहिपादानापृच्छय श्रीसूरयः चातुर्मासकमध्येपि चलंतः श्रीपाटणनगरे समागतास्तदा च संवत् १६५२ वर्षे श्री उन्नानगरे श्रीहीरविजयसूरेश्च निर्वाणं समाकर्ण्य तत्रैवस्थिताःतत्र क्रमेण संवत् १६५४ वर्षे श्रीशवंदरपूरे श्रीविजयचिंतामणि पार्श्वनाथबिंबस्थापनां विधाय लाडोलग्रामे सूरिमंत्राराधनं विधाय च श्रीस्थंभतीर्थे श्रीविजयदेवसूरिभ्यः सूरिपदं दत्वा श्रीपाटणनगरे गणाऽनुज्ञानंदि श्रीसूरयश्चक्रुः, तदा राजनगरवास्तव्यसा० सूराकेन प्रतिश्राद्धगृहं महंमूदिकालंभनिका चक्रे तस्मिन् संवत्सरे श्राद्धैर्लक्षमहंमुदिकाव्ययश्च कृतः एवमनेकभव्यजनान् प्रतिबोध्य पंचाशज्जिनप्रतिष्ठा च कृत्वा अष्टवाचकपदानि दत्वा सार्द्धशतपण्डितपदानि च दत्वा द्विसहस्रपरिकराः श्रीविजयसेनसूरयः स्थंभतीर्थे संवत् १६७१ वर्षे ज्येष्ठवदि ११ दिने स्वर्गं प्राप्ताः ॥५९॥

(६०) श्रीविजयसेनसूरिपट्टे षष्टितमः "श्रीविजयदेवसूरिः" तस्य च संवत् १६३४ वर्षे ईडरदुर्गे उकेशजातीय सा० थिरा-भार्यारूपागृहे जन्म, संवत् १६४३ वर्षे दिक्षा, संवत् १६५५ वर्षे पन्यासपदं, संवत् १६५६ वर्षे सूरिपदं, तस्य च पदमहोत्सवे स्थंभतीर्थवासिश्रीमल्लकेन दशसहस्ररूप्यक

व्ययश्चक्रे, संवत्१६५८वर्षे पाटणनगरवासिपारिखसहस्रवीरेण पंच-
सहस्रमहमुंदिकाव्ययेन गणानुज्ञानंदिमहोत्सवः कृतः ॥

अत्रांतरे पातसाहि श्रीजिहांगिरः श्रीमंडपाचले समाकार्य
श्रीजैनधर्मचर्चाश्रवणात् संतुष्टः सन् श्रीसूरीणां"महातपा"विरुदं दत्तवान्,
तन्महोत्सवः सा०चंद्रकेन कृतः क्रमेण विहारं कुर्वन् सावलीनगरे सूरिमंत्रा- 5
राधनं कृत्वा च कालांतरे ईडरनगरवासि सा०सहजूकृतमहोत्सवेन संवत्
१६८२वर्षे श्रीविजयसिंहसूरिं श्रीगुरुः स्थापयामास। तदनु संवत् १६८४-
वर्षे जालोरनगरे मं०जयमल्लजीकेन श्रीविजयसिंहसूरीणां गणानुज्ञानंदि-
महोत्सवश्चक्रे, क्रमेण श्रीउदयपुरे राणाश्रीजगसिंघजीअत्याग्रहात् चातु-
र्मासकं कृत्वा श्रीगुर्जरदेशे श्रीआचार्यसहिताः श्रीसूरयः समागताः। श्रीशत्रुं- 10
जयतीर्थ-यात्रां प्रतिष्ठां च कृत्वा, क्रमेण दक्षिणदेशे बर्हानपुरबीजापुरनग-
रादिसंघकृतमहोत्सवेन चातुर्मासचतुष्टयं श्रीसूरिः कृतवान्, तदनु संघाग्र-
हात् श्रीगुर्जरदेशमलंचकार ।

तस्मिन् समये "श्रीविजयसिंहसूरयोपि" मरुदेशादायाताः श्रीअ-
हम्मदावादनगरे श्रीविजयदेवसूरिचरणान्नेमुः क्रमेण भव्यजीवान् प्रति- 15
बोधयंतः श्रीसूरयः स्थंभतीर्थे चातुर्मासकं स्थितवांसः तस्मिन् समये श्रीवि-
जयसिंहसूरिः शरीरबाधावशात् अहमदावादनगरासन्ननवीनपुरे तस्थि-
वान्, तस्य च संवत्१६४४वर्षे श्रीमेडतानगरे उकेशज्ञातियसा०नथ-
मल्ल-भार्यानायकदेगृहे जन्म। संवत् १६५४ वर्षे दीक्षा, संवत् १६७३
वर्षे वाचकपदं, संवत् १६८२ वर्षे सूरिपदं अष्टाविंशतिवर्षाणि गुरुसे- 20
वायां, संवत् १७०६ वर्षे आषाढशुदि२दिने स्वर्गगतिः।

तदनु श्रीपरमगुरुः गंधारबंदिरे समेत्य श्रीराजनगरादिसंघाग्रहात्
स्वपट्टे श्रीविजयप्रभसूरिं संस्थाप्य श्रीसुरतबंदिरे चातुर्मासकं तस्थौ, क्रमेण
भव्यजीवान् प्रतिबोधयंतः श्रीआचार्यसहिताः श्रीगुरवः सौराष्ट्रदेशसंघा-
ग्रहात् श्रीशत्रुंजयतीर्थयात्रां कृत्वा श्रीदीवबंदिरासन्नउंनानगरे समेताः 25
तत्र च संवत् १७१३ वर्षे आषाढशुदि११दिने स्वर्गं प्राप्तः।

( ६१ ) श्रीविजयदेवसूरिपट्टे एकषष्टितमः श्रीविजयप्रभसूरिः ॥ तस्य च संवत् १६७७ वर्षे कच्छदेशे मनोहरपुरे उकेशज्ञातीयसा० शिवगण भार्याभाणबाइगृहे जन्म; संवत् १६८६ वर्षे दीक्षा, संवत् १७०१ वर्षे पन्यासपदं संवत् १७१० वर्षे गंधारबंदरे सूरिपदं, श्रीराजनगरीय सा० अपइदेवचंद्रभार्यासाहिबदेनाम्न्या श्राविकया पदमहोत्सवः कृतः, श्रीसूरिभिः 5 देवतोपदेशात् "श्रीविजयप्रभसूरि" रितिनाम सप्रत्ययं प्रदत्तं । तदनु सूरयः श्रीआचार्यसहिताः संवत् १७११ वर्षे श्रीराजनगरे समागतास्तत्र चतुर्मासके समुत्तिर्णे सा० सूरारतन-सूरसावनजीकेन बहुद्रव्यव्ययकरणपूर्वकं गणानुज्ञानंदिमहोत्सवः कृतः । क्रमेण संवत् १७१३ वर्षे श्रीपरमगुरुचरणसेवां कुर्वंतः श्रीविजयप्रभसूरयः सोराष्ट्रदेशं समलंचक्रुः, तत्र चातुर्मास- 10 दशकं कृत्वा सं० १७२२ वर्षे गुर्जरदेशे समायाता स्तत्र चातुर्मासत्रयं कृत्वा सं० १७२६ वर्षे श्रीउदयपुरनगरे समागताः ।

उदयपुरवास्तव्यसा० जीवोजावरीओ (ए) प्रासाद करान्यो, तेनी प्रतिष्टा करावी, बहुद्रव्यव्ययः कृतः ।

ततस्तद्देशे चतुर्मासद्वयं कृत्वा श्रीमरुदेशं समलंचक्रुः । श्रीसूरयः 15 संवत् १७३२ वर्षे श्रीनागोरनगरे पालणपुरवास्तव्य उकेशज्ञातियसा० हीरा भार्याहीरादेपुत्ररत्नं श्रीविजयरत्नसूरिं स्वपट्टे संस्थाप्य श्रीमेडतानगरे चातुर्मासकं तस्थौ । तदनु क्रमेण भव्यजीवान् प्रतिबोध्य मेवाडमेवातमरुदेशे विहृत्य च संवत् १७३६ वर्षे गूर्जरदेशसंघाग्रहात् श्रीपाटणनगरे चातुर्मासं समागताः । संप्रतिकाले अभिनवगौतमावताराः साक्षात्कल्पतरुरूपाः 20 सकलपरिवारविराजमानाश्च सकलसंघकल्याणमालाभ्युदयप्रदा भवंतु ।

आचार्यश्रीविजयरत्नसूरिसिंहानां द्विधापि स्वभ्रातृ पं० श्रीविमलविजयगणिवाचनाकृते पट्टावलीसारोद्धारः समुद्धृत श्रीरविवर्द्धनगणिभिरिति मंगलं । इति श्रीपट्टावलीसंपूर्णं लिखितं श्रीपाटणनगरे श्रीपार्श्वनाथप्रसादात् श्रीरस्तु । अथ अनुपूर्त्तिः — 25

५९—श्रीविजयसेनसूरिः ॥ ६०—राजसागरसूरिः ॥ ६१—वृद्धिसागरसूरिः ॥ ६२—लक्ष्मीसागरसूरिः ॥ ६३—कल्याणसागरसूरिः ॥

# श्रीगुरुपट्टावली

[ कर्ता : ]

श्रीमगंसीश्वराय नमः । अथाऽत्र श्रीपर्यूषणापर्वणि समागते चतुर्मास-
कस्थां मुनयो मांगलिकं पर्यूषणकल्पनामाध्ययनं पंचदिनानि वाचयन्ति ।
तद्वाचनादनु च सर्वं हि कार्यं मुखमध्याऽन्त्यकृतमंगलं सत् सुखाय भवति
ततोऽत्रापश्चिममंगलार्थं गुरुपरिपाटी वर्णनीया एतद्वर्णनस्योत्कृष्टतम-
मंगलत्वात् । अत एव सर्वं धर्मानुष्ठानादि गुर्वाज्ञासंयुक्तं मोक्षफलदं 5
स्यादतोगुरुपर्वक्रमलक्षणसम्बन्धज्ञापनाय पट्टावली वाचनीयैव ॥

तत्राहतां चरमः श्रीवर्द्धमानो भगवान् तीर्थंकर एव गुरुपाटीमूलं ॥
तस्मात्पूर्वं भगवतः स्वयंबुद्धत्वात् अन्यस्य गुरोरभावात् ॥ स च भगवान्
त्रिंशद्वर्षाणि ३० गृहस्थपर्याये, सार्द्धद्वादश१२वर्षाणि छद्मस्थावस्थायां,
त्रिंशत्३०वर्षाणि केवलित्वे, सर्वायुः साधिकद्वासप्तति७२वर्षाणि प्रपाल्य, 10
सिद्धः परिनिवृत इति ॥

तत्पट्टे १ श्रीसुधर्मास्वामी पञ्चमगणधरः प्रथमोदयस्य प्रथमाचा-
र्यो बभूव । स च पंचाशत् ५० वर्षाणि गृहे त्रिंशद्वर्षाणि ३० वीरसेवायां
ततः श्रीवीरनिर्वाणात् द्वादशवर्षाणि छाद्मस्थ्ये अष्टौ वर्षाणि केवलित्वे
सर्वायुः शतमेकं प्रपाल्य श्रीवीरात् त्रिंशतिवर्षैः सिद्धः ॥ 15

तत्पट्टे २ श्रीजंबूस्वामी । येन राजगृहे ऋषभदत्तधारिण्योः सुतेन
संजातवैराग्यान्नवनवति९९कोटि संयुक्ता अष्टौ कन्यकास्त्यक्ताः पंचशतंचौराः
प्रभवादिः अष्टौ कन्यास्तन्मातृपितरः स्वमातृपितरौ एवं पंचशतसप्तविंशति
५२७ जनसंगे दीक्षा गृहिता । षोडश१६वर्षाणि गृहे, विंशति २० वर्षाणि
व्रते चतुश्चत्वारिंशत् ४४ वर्षाणि युगप्रधानभावे । सर्वायुरशीति 20
वर्षाणि प्रपाल्य श्रीवीराच्चतुःषष्टि६४वर्षांते सिद्धः ।

तदा मनःपर्यवज्ञानं १ परमावधिज्ञानं २ पुलाकलब्धिः ३ आहारक शरीरं ४ क्षपकश्रेणिः ५ उपशमश्रेणिः ६ जिनकल्पिमार्गः परिहारविशुद्धि-चारित्र १ सूक्ष्मसम्पराय २ यथाख्यात ३ रूपसंयमत्रयं ८ केवलज्ञानं ६ मोक्षगमनं १० एते दशपदार्था अत्र भरते व्युछिन्नाः।

तत्पट्टे ३ श्रीप्रभवस्वामी। स च त्रिंशद्वर्षाणि ३० गृहे चतुश्चत्वा-रिंशत् ४४ वर्षाणि व्रते एकादश ११ वर्षाणि युगप्रधानभावे सर्वायुः पञ्चा-शीति ८५ वर्षाणि प्रपाल्य श्रीवीरात् ७५ पंचसप्ततिवर्षे स्वर्ययौ। (नवनंद इणांकै वारै)

तत्पट्टे ४ श्रीशय्यंभवस्वामी। स च स्वगृहे यज्ञं कुर्वाणः पंचशत-द्विजैः "अहोकष्टमहोकष्टं तत्वं न ज्ञायते क्वचिदिति" साधुवचः श्रुत्वा यज्ञस्तं भाधःस्थितश्रीशांतिजिनबिंबदर्शनाद् बुद्धः। अष्टाविंशतिवर्षाणि गृहे स्थित्वा व्रतं ललौ। एकादश ११ वर्षाणि व्रते त्रयोविंशतिवर्षाणि युगप्रधानत्वे सर्वायुर्द्वाषष्टि ६२ वर्षाणि प्रपाल्य श्रीवीरात् ९८ वर्षातिक्रमे स्वर्ययौ।

अनेन भगवता मनकनाम्नः स्वसुतस्य पठनाय दशवैकालिकं कृतं।

तत्पट्टे ५ श्रीयशोभद्रस्वामी। स च २२ वर्षाणि गृहे १४ वर्षाणि व्रते ५० वर्षाणि युगप्रधानत्वे सर्वायुः षडशीति ८६ वर्षाणि प्रपाल्य श्रीवीरात् १४८ वर्षांते स्वर्ययौ।

तत्पट्टे ६ श्रीसम्भूतिविजयस्वामि-श्रीभद्रबाहुस्वामिनौ एतौ द्वौ षष्टपट्टधरौ बभूवतुः तत्र प्रथमः ४२ वर्षाणि गृहे ४० वर्षाणि व्रते अष्टौ वर्षाणि युगप्रधानत्वे सर्वायुर्नवति ९० वर्षाणि परिपाल्य स्वर्ययौ।

भद्रबाहुस्वामी पुनः श्रीआवश्यकादिनिर्युक्तिकृत्। तद्भ्राता वराह-मिहरस्त्यक्तव्रतो राज्ञःपुरोहितो राज्ञः पुरोनिमित्तप्रकाशाद्यैः प्राप्तप्रतिष्ठः तद्-भ्रातुःपराजयकरणे सभासमक्षं ५१ पलप्रमाणो मत्स्यः कुण्डप्रान्ते पतिष्यति गुरुर्वक्ति ५२ पलप्रमाणो मत्स्यः कुण्डमध्ये पतिष्यति जिनशासनप्रभावात् गुरुवाक्यमेव सञ्जातं राजाऽपि शासनोत्सवं चकार। ततोऽसौ वराहमि-हिरो मानभ्रष्टो मृत्वा व्यंतरीभूतः श्रीसङ्घमुपदद्राव, तज्ज्ञात्वा च भगवता

उपसर्गहरस्तोत्रकरणेन स उपद्रवो निवारितः। स भगवान् ४५ वर्षाणि गृहे सप्तदश१७वर्षाणि व्रते चतुर्दश१४वर्षाणि युगप्रधानत्वे सर्वायुः षड्सप्तति७६वर्षाणि प्रपाल्य श्रीवीरात् १७० वर्षे स्वर्ययौ।

तत्पट्टे ७ श्री स्थूलभद्रस्वामी पूर्वपाठी १० पूर्वाणि अर्थतः ४ पूर्वाणि सूत्रतो अधीतवान्। ३० वर्षाणि गृहे २४वर्षाणि व्रते ४५ वर्षाणि युगप्रधानत्वे सर्वायुर्नवनवति६६वर्षाणि प्रपाल्य श्रीवीरात् २१५वर्षे स्वर्ययौ। 5

तत्पट्टे ८ श्रीआर्यमहागिरि–आर्यसुहस्तिनामानौ उभौ अष्टमपट्टधरौ जातौ। तत्र प्रथमस्य त्रिंशद्वर्षाणि गृहे चत्वारिंशद्व्रते त्रिंशत् युगप्रधानत्वे सर्वायुः शतवर्षाणि।

द्वितीयेनाऽऽर्यसुहस्तिना पूर्वभवे कश्चिद्द्रमकः प्राव्राजितः स च 10 मृत्वा सम्प्रतिराजस्त्रिखंडपतिर्जज्ञे स प्रतिबुद्धः सन् सपादकोटिबिंब—सपादलक्षनव्यजिनप्रसाद—३६सहस्रजीर्णोद्धार—६५सहस्रपित्तलमयबिंब—७००सप्तशतदानशालाप्रभृतिसुकृतकृत्यैः श्रीजिनशासनं प्राभावयत्।

श्रीसुस्थितसूरिः त्रिंशद्वर्षाणि गृहे चतुर्विंशति२४वर्षाणि व्रते ४६व० युगप्रधानत्वे चेऽति सर्वायुः शतमेकं परिपाल्य श्रीवीरात् २६१ वर्षे 15 स्वर्ययौ +

तत्पट्टे ६ श्रीसुस्थितसूरि–श्रीसुप्रतिबद्धसूरी जातौ। नवमे पट्टे कोटिवारं सूरिमंत्रजापात् तदा कोटिकनाम्ना द्वितीयं नाम गच्छस्य जातं, पूर्वं निर्ग्रंथ इति नाम आसीत्।

एतद्वारके बलिस्सहशिष्यः स्वातिवाचकस्तत्वार्थसंग्रहग्रन्थकारी। 20 तच्छिष्यः कालकाचार्यः प्रज्ञापनासूत्रकृत्। श्रीवीरात् ३७६ वर्षे स्वर्ययौ।

तत्पट्टे १० श्री इन्द्रदिन्नसूरिः

अत्रांतरे वीरात्४५३वर्षे भृगुकच्छे आर्यखपटसूरिः।

---

+ टिप्पनकम्—अवंतीसुकुमालदीक्षामृतिस्थाने देवकुलं क्रमेण महाकालेति नाम संजातं।

वीरात् ४५३ वर्षे कालिकाचार्यः सर्वसङ्घमान्यः गर्द्दभिल्लविद्याभेदकारी येन पंचमीतः चतुर्थ्यां पर्यूषणापर्व स्थापितं।

४६७ वर्षे आर्यमंगुवृद्धवादिपादलिप्तश्रीसिद्धसेनाद्याचार्या बभुवुः।

संवत्सरकृद्विक्रमराजोपि। तद्राज्यं चैवं—यदा श्रीवीरः सिद्धस्तदा तद्दिन एव पालकराजा राज्येऽभिषिक्तः। तद्राज्यं ६०वर्षाणि, ततो ६ नन्दराज्यं १५५वर्षाणि, १०८वर्षाणि ततो मोरिअराजराज्यं, ततः पुष्पमित्रस्य त्रिंशद्वार्षाणि ३० राज्यं, ततो बलमित्रयोःपष्टि६०वर्षाणि राज्यं, ततः ४०वर्षाणि नभःसेनराज्यं, ततः १३वर्षाणि गर्द्दभिल्लराज्यं, ततः शकस्य ४वर्षाणि राज्यं। एवं सर्वमीलने श्रीवीरात् ४७० वर्षे विक्रमादित्यराज्यं। तथा श्रीसिद्धसेनदिवाकरेणोज्जयिनीनगर्य्यां महाकालप्रसादे लिंगस्फोटनं विधाय स्तुत्या ११ काव्ये श्रीपार्श्वबिम्बं प्रगटीकृतं, कल्याणमन्दिरस्तोत्रं कृतं।

तत्पट्टे ११ दिन्नसूरिः। तत्पट्टे १२ श्रीसिंहगिरिसूरिः।

तत्पट्टे १३ श्रीवज्रस्वामी। यो बाल्येपि जातिस्मृतिभाक् अधीतैकादशांगः नभोगमनविद्यया संघरक्षाकृत् दक्षिणस्यां बौधराज्ये जिनपूजार्थं पुष्पानयनेन तीर्थप्रभावको देवाभिवन्दितो दशमपूर्वविदामऽपश्चिमो बभूव। स च वीरात् ४९६वर्षान्ते विक्रमान् षडविंशतिवर्षे जातः सन् अष्टौ वर्षाणि गृहे ४४व्रते ३६वर्षाणि युगप्रधानत्वे सर्वायुरष्टाशीति८८वर्षाणि परिपाल्य वीरात् ५८४वर्षांते विक्रमात् चतुर्दशाधिकशततवर्षे स्वर्ययौ। दशमपूर्वं तूर्यसंहननतूर्यसंस्थानव्युच्छेदस्तदाऽजनिष्ट। वज्रशाखाप्यऽतः प्रवृत्ते तदा ५७० वर्षे जावडिकृतोद्धारः।

तत्पट्टे १४ श्रीवज्रसेनसूरिः स च दुर्भिक्षे श्रीवज्रस्वाम्याज्ञया सोपारके परवने गत्वा जिनदत्तगृहे ईश्वरीनाम्न्या भार्यया दुर्भिक्षभयाल्लक्षपाकभोज्ये विषक्षेपादिकारणे निवेदिते प्रातः सुकालो भावीत्युक्त्वा विषनिक्षेपं निवार्य्य नागेन्द्र १ चन्द्र २ निवृति ३ विद्याधरा ४ ख्यान् चतुरः सकुटुम्बेभ्यपुत्रान् प्राव्राजितवान् तेभ्यश्चत्वारि कुलानि जज्ञिरे।

स वज्रसेनो ६ वर्षाणि गृहे ११६व्रते त्रीणि वर्षाणि युगप्रधानत्वे सर्वायुः साष्टाविंशतिशतं प्रपाल्य वीरात् ६२० वर्षान्ते स्वर्गभाक् बभूव ।

तदा ६०६ वर्षे विक्रमात् १३६ वर्षे दिगम्बरसम्प्रदायोत्पत्तिः ।

तत्पट्टे १५ श्रीचंद्रसूरिस्तस्माच्चंद्रकुलं, "चन्द्रगच्छे"ति तृतीयं गच्छनाम संज्ञातं क्रमादनेकगुणहेतवो अनेकसूरयो बभुवुः । 5

तत्पट्टे १६ श्रीसामंतभद्रसूरिः । अस्य देवकुलादिष्ववस्थानाल्लोकैर्वनवासीति नाम कृतं ततो गच्छनाम तूर्यं "वनवासी"ति प्रवृत्तं ।

तत्पट्टे १७ श्रीवृद्धदेवसूरिः । तत्पट्टे १८ श्रीप्रद्योतनसूरिः ।

तत्पट्टे १९ श्रीमानदेवसूरिः । अस्य सूरिपदे स्कंधोपरिवाग्देवीलक्ष्म्यौ वीक्ष्य, चारित्रादस्य भ्रंशो भावीति विषण्णं विषन्नादप्राप्तं गुरुं 10 विज्ञाय, भक्तकुलभिक्षाः सर्वा विकृत्यश्च येन त्यक्ताः । तत्तपसा नड्डुलपुरे पद्मा १ जया २ विजया ३ अपराजिताख्या ४भिर्देवीभिः सेवितं गुरुं दृष्ट्वा सर्वे जनाः धर्मप्रशंसां चक्रुः ।

तत्पट्टे २० मानतुङ्गसूरिः। येन वाणमयूरपंडितविद्यातिशयेन रंजितजनात् जैननिन्दां श्रुत्वा प्रभावनायै अष्टचत्वारिंशद्गुप्तातिगुप्ततमवरकम- 15 ध्यस्थेनाऽऽकंठश्रृंखलबद्धेन भक्तामरस्तवनकरणात् गतबन्धनेन बहिरागत्य चमत्कृतो नृपः प्रतिबोधितः । नमिऊण इत्यादिस्तवेन नागराजो वशीकृतः ।

तत्पट्टे २१ वीरसूरिः ॥ तत्पट्टे २२ जयदेवसूरिः ॥

तत्पट्टे २३ श्रीदेवानन्दसूरिः ॥ तत्पट्टे २४ श्रीविक्रमसूरिः ॥

तत्पट्टे २५ श्रीनरसिंहसूरिः ॥ तत्पट्टे २६ श्रीसमुद्रसूरिः ॥ 20

तत्पट्टे २७ श्रीमानदेवसूरिः । तदा श्रीवीरात् वर्षसहस्रे गते सत्यमित्रसूरेः पूर्वविद्याव्यवच्छेदोभूत् तथा विक्रमात् ५८५ वर्षे चतुश्चत्वारिंशदुत्तरचतुर्दशशत १४४४ प्रकरणकृत् श्रीहरिभद्रसूरिः स्वर्गतः । तत्काले च श्रीकालिकाचार्योपि बभूव, येन ९९३ वर्षे पंचमीतश्चतुर्थ्यां प्रवर्तितमिति । 25

तत्पट्टे २८ श्रीविबुधप्रभसूरिः ।

तत्पट्टे २६ जयानन्दसूरिः देवाप्रभो०स्तोत्र कीधो(कृतं) ॥ तत्पट्टे ३० श्रीरविप्रभसूरिः। वीरात् १२७२ वर्षे अणहिलपुरपाटणस्थापना कृता।

तत्पट्टे ३१ श्रीयशोदेवसूरिः।

आमराजप्रबोधकश्रीबप्पभट्टसूरिः विक्रमात् ८८५ वर्षे स्वर्ययौ।

तत्पट्टे ३२ प्रद्युम्नसूरिः। तत्पट्टे ३३ श्रीमानदेवसूरिः लघुशान्तिकर्ता। 5

तत्पट्टे ३४ विमलचन्द्रसूरिः।

तत्पट्टे ३५ उद्योतनसूरिस्तेनार्बुदाचले विस्तीर्णवटवृक्षाधः श्रीसर्वदेवसूरीणां स्वपट्टे स्थापने कृते वडगच्छ इति पंचमं नाम गणस्य जातं।

तत्पट्टे ३६ सर्वदेवसूरिः। उत्तराध्यनटीकाकृता (श्रीशांतिसूरिभिः) विक्रमात् १०६८ वर्षे धर्मघोषसूरिः (येन) विमलमंत्रीश्वरःप्रबोधितः। 10

धनपालःशोभनस्तुति(टीका)कर्त्ता श्रीवीरात् १४६६ वर्षे स्वर्गं ययौ।

तत्पट्टे ३७ श्रीदेवसूरिः। तत्पट्टे ३८ सर्वजयदेवसूरिः।

तत्पट्टे ३६ यशोभद्रसूरिः। नडुलाईमध्ये जिनालयं लात्वा स्थितः।

तत्पट्टे ४० सर्वदेवसूरिः विक्रमात् ११३६ वर्षे नवांगवृत्तिकृद् अभयदेवसूरिः स्वर्गं गतः × ततःमुनिचंद्रसूरिः ÷ एतद्वारके स्वगुरुभ्राता श्री- 15

---

÷ टिप्पनकम्ः—श्रीवीरात् + + राज्ये सं० ११३३ साल में काल पडियो। सं० + + लगे कोइ आचार्य हुओ नहीं। फिर मुनिचंद्रसूरि हुये, जिनोने सिद्धांत देखकर प्रवर्ते॥

× "श्रीअभयदेवसूरिः" चंद्रकुलावतंसानां श्रीजिनेश्वरसूरीणां श्रीबुध्धिसागरसूरीणां शिष्यः तस्य वि० १०७२ वर्षे जन्म, वि०सं०१०८८वर्षे सूरिपदं वि०सं०११३५ मतांतरेण ११३६ वर्षे स्वर्गमनं। तत्कृतग्रन्थाः—नवांगानां वृत्तयः (सं०११२०-११२८), औपपातिकवृत्तिः, प्रज्ञापना तृतीयपदसंग्रहणी (गा०१३३ वृत्तिः, पंचाशकवृत्तिः (सं० ११२४) जिनचंद्रगणिकृतनवतत्वप्रकरणभाष्यं,(वृत्तिः) देवेंद्रसूरिकृतसत्तरीग्रन्थभाष्यं (पद्यटीका), पंचनिग्रन्थीप्रकरणं, जयतिहुअण स्तोत्रं, आराधनाकुलकं इत्याद्याः—अयंसूरिः कस्य भगवतःशिष्यः तन्निश्चेतुं न शक्यते॥ तद्यथा—

चन्द्रप्रभसूरिः सं० ११५६ वर्षे पूर्णिमापाक्षिकं (पूनमियागच्छं) प्ररूपितवान्। तत्समये कूर्चपुरगच्छीयचैत्यवासिश्रीजिनेश्वरसूरिशिष्यो जिनवल्लभनामा चित्रकूटे षट्कल्याणप्ररूपणया ऽविधिसङ्घं स्थापितवान् तत्सम्प्रदायः खरतर इति व्यवह्रीयते विक्रमात् १२०४ वर्षे जातः।
मुनिचन्द्रसूरिः अनेकग्रन्थकर्ता अभूत् निर्मलचारित्रं प्रपाल्य स्वर्गं ययौ। 5

---

१—श्रीस्थानांगसूत्र—वृत्तिः (श्लो० १४२५०) तच्चन्द्रकुलीनप्रवचनप्रणीताप्रतिबद्धविहारहारिचरितश्रीवर्धमानाभिधानमुनिपतिपादोपसेविनः प्रमाणादिव्युत्पादनप्रवणप्रकरणप्रबन्धप्रणायिनः प्रबुद्धप्रतिबन्धप्रवक्तृप्रवीणाऽप्रतिहतप्रवचनार्थप्रधानवाक्प्रसरस्य सुविहितमुनिजनमुख्यस्य श्रीजिनेश्वराचार्यस्य तदनुजस्य च व्याकरणादिशास्त्रकर्तुः श्रीबुद्धिसागराचार्यस्य चरणकमलचञ्चरीककल्पेन श्रीमदभयदेवसूरिनाम्ना मया महावीरजिनराजसन्तानवर्त्तिना महाराजवंशजन्मनेव, संविग्नमुनिवर्गश्रीमदजितसिंहाचार्यान्तेवासियशोदेवगणिनामधेयसाधोरुत्तरसाधकस्येव, विद्याक्रियाप्रधानस्य साहाय्येन समर्थितं। (सं० ११२०)।

२—श्रीज्ञाताधर्मकथांगवृत्तिः ॥ ग्रं०३८०० ॥ (सं०११२०)

तस्याचार्य "जिनेश्वरस्य" मदवद्वादिप्रतिस्पर्धिनः।
तद्बंधोरपि "बुद्धिसागर" इति ख्यातस्य सूरेर्भुवि ॥
छन्दोबन्धनिबन्धबन्धुरवचः शब्दादिसल्लक्ष्मणः।
श्रीसंविग्नविहारिणः श्रुतनिधेश्चारित्रचूडामणेः ॥८॥
शिष्येणा"ऽभयदेवाख्य" सूरिणा विवृतिः कृता ॥
ज्ञाताधर्मकथाङ्गस्य श्रुतभक्त्या समासतः ॥९॥

३—श्रीऔपपातिकवृत्तिः। (श्लो० ३१२५) सं० ११२०

चन्द्रकुलविपुलभूतलयुगप्रवरवर्धमानकल्पतरोः।
कुसुमोपमस्य सूरेः गुणसौरभभरितभवनस्य ॥१॥
निस्सम्बन्धविहारस्य सर्वदा श्रीजिनेश्वराह्वस्य।
शिष्येणाभयदेवाख्यसूरिणेयं कृता वृत्तिः ॥२॥

तत्पट्टे ४१ अजितदेवसूरिः एतद्गुरुभ्रात्रा श्रीवादिदेवसूरिणा अणहिल्लपत्तने जयसिंहदेवस्य राजसभायां चतुरशीतिवादे लब्धयशा दिगम्बराचार्यः कुमुदचन्द्रो वादे निर्जित्य पत्तने अद्यापि दिगम्बरप्रवेशो निवारितः। विक्रमात् १२०४ वर्षे फलवर्धिग्रामे बिंबप्रतिष्ठा कृता। ८०००० सहस्र प्रमाणस्याद्वादरत्नाकरनामा तर्कग्रन्थः कृतः, एतेषां विक्रमात् १२२६ 5 श्रावणसिते स्वर्गः। तथैतत्समये श्रीदेवचन्द्रसूरिशिष्यस्त्रिकोटिग्रंथकर्ता हेमचन्द्रसूरिर्जज्ञे ऽस्य विक्रमतः११४५वर्षे कार्तिक१५दिने जन्म, सं० १२२९ वर्षे स्वर्गं, तथा येन सं० १२१४ हेमनाममालाकृता, कुमारपालराजा प्रतिबोधितः पूर्णतलगच्छं स्थापितं। तस्याग्रे मुखवस्त्रिका श्राद्धस्य न योग्येति कृत्वांचलेन वंदनकदानादांचलिकगच्छस्थितिः प्रादुर्भूता। तथा 10 विक्रमात् १२३६ सार्द्धपौर्णिमीयकोत्पत्तिः सं० १२५० आगमिकसम्भवः। श्रीवीरात् १६९२ बर्षे बाहडोद्धारः।

तत्पट्टे ४२ विजयसिंहसूरिः

तत्पट्टे ४३ सोमप्रभसूरिः श्रीमणिरत्नसूरिः द्वौ पदधरौ। अस्य वारके वस्तुपालतेजपालयोः१२६२जन्म (येन) सिद्धाचलयात्रा कृता, अर्बुदाचले 15 चैत्यालयं कारापितं १८ कोडिरजतलग्नेन, अद्यापि तीर्थप्रवृतिरस्ति।

तत्पट्टे ४४ "जगच्चन्द्रसूरिः" स्वयं वैराग्यरससागरः जावज्जीवं आचाम्लतपोभिग्रहात् द्वादशवर्षे नाहडराणैः तपाविरुदमाप्तवान् ततः पष्ठं नाम"तपागच्छे"ति प्रसिद्धं जातं सं० १२८५। ×

तत्पट्टे ४५ श्रीदेवेंद्रसूरिः कर्मग्रन्थश्राद्धदिनकृत्यवृत्त्यादिग्रन्थकृत् 20 एतत्तीर्थात् विजयचन्द्रसूरेर्वृद्धशालायां द्वावशवर्षाणि यावदेकत्रस्थितात् "वृद्धशालिकनाम्ना"सम्प्रदायोऽभूत् श्रीदेवेंद्रसूरिभिः प्रह्लादनपुरे सं०१३२३ श्रीविद्यानन्दसूरयः स्वपदे निवेशिताः श्रीगुरवो विक्रमात् १३२७ स्वर्ययुः

× पद्मावतीवचनतो ऽभ्युदयं विभाव्य। यत्सूरये स्तवनसप्तशतीं स्वकीयाम्॥
सूरिर्जिनप्रभ उपप्रददे प्रथायै। सो ऽयं सतां "तपगणो"न कथं प्रशस्यः ॥१॥

दैवयोगात् विद्यानन्दसूरयोऽपि त्रयोदशदिनांतरिताः स्वर्ययुः। ततः षड्भिर्मासैः सगोत्रिणा श्रीधर्मकीर्त्युपाध्यायानां "श्रीधर्मघोषसूरि" रिति नाम्ना सूरिपदं दत्तं। ÷

तत्पट्टे ४६ श्रीधर्मघोषसूरिः। अनेन भगवता एकदा कश्चित् क्षुल्लकप्रव्राजितः स गुटिकाप्रयोगेण योगिभिर्भापितः कफोणिकामदर्शयत् तदा योगिभिरपि क्षुल्लकभापनार्थं दंता दर्शिताः साधुभिस्तैर्मन्त्रप्रयोगेण निराकृतस्तदा तैरुपाश्रये मूषका विकुर्विता गुरुभिर्घटमुखं वस्त्रेण छाद्य तथा जप्तं यथा रार्टिं विकुर्व्वन् वृद्धयोगी आगत्य पादयोर्लग्नः इत्यादयो भूयांसो व्यतिकरास्तत्कृतग्रन्थाश्च सङ्घाचाराद्यास्ते च विक्रमात् १३५७ दिवं गताः।

तत्पट्टे ४७ सोमप्रभसूरिः। विक्रमात्१३७३वर्षे अस्य स्वर्गः।

अन्यत्र कापि पुरे यात्रावतीर्णं देवतयोक्तं "यत्तपाचार्यः सौधर्मेंद्रसामानिकत्वेन समुत्पन्न" इति।

तत्पट्टे ४८ सोमतिलकसूरिः। तस्य विक्रमात् १४२४ वर्षे स्वर्गः। सर्वायुरेकोनसप्तति ६९ वर्षाणि।

---

÷ देवेन्द्रसूरिणा करालकलिकालपातालतलावमज्जद्विशुद्धधर्मधुरोद्धरणधुरीणश्रीमज्जगच्चन्द्रसूरिचरणसरसीरुहचंचरीककल्पेन लिखितमक्षरविन्यासीकृतं।

क्रमात्प्राप्त"तपाचार्ये"त्यभिख्या भिक्षुनायकाः।
समभूवन् कुले चान्द्रे श्रीजगच्चन्द्रसूरयः ॥४॥
जगज्जनितबोधानां तेषां शुद्धचरित्रिणाम्।
विनेयाः समजायन्त "श्रीमद्देवेन्द्रसूरयः ॥५॥
स्वान्ययोरुपकाराय श्रीमद्देवेन्द्रसूरिणा।
स्वोपज्ञशतकटीका सुबोधेयं विनिर्ममे ॥६॥
विबुधवर"धर्मकीर्ति"श्री"विद्यानन्द"सूरिमुख्यबुधैः।
स्वपरसमयैककुशलैस्तदैव संशोधिता चेयम् ॥७॥

इति स्वोपज्ञकर्म्मग्रन्थप्रशस्तौ ॥

तत्पट्टे ४६ देवसुन्दरसूरिस्तेषां शिष्याः-श्रीज्ञानसागरसूरिः "श्री कुलमण्डनसूरिः" प्रमुखा विद्वांसः क्रियापरायणा विविधग्रंथकृतो बभुवुः ।

तत्पट्टे ५० सोमसुन्दरसूरिः प्राग्वंशी राणपुरप्रतिष्ठाकृत् पालणपुरे भगिन्या सह संयमं जग्राह ।

तत्पट्टे ५१ मुनिसुन्दरसूरिः कृष्णसरस्वतीविरुदभृत, संविग्नमौलि- 5 रध्यात्मकल्पद्रुम-सन्तिकरादिग्रंथकृत् । विक्रमात् १५०३ वर्षे स्वर्ययौ ।

तत्पट्टे ५२ श्रीरत्नशेखरसूरिः अस्य १४५७ वर्षे जन्म १४६३ व्रतं १४८३ पंडितपदं १४९३ वाचकपदं १५०३ सूरिपदं सं० १५१७ पोस-वदि, ६ दिनेस्वर्ययौ । एतत्कृता ग्रन्थाश्च श्राद्धविध्यादयस्तदा लुम्पका-ख्यलेखकात् विक्रमतः १५०८ वर्षे लुङ्कामतं प्रवृत्तं, तन्मतवेषधरास्तु 10 १५३३ वर्षे जाताः ।

तत्पट्टे ५३ लक्ष्मीसागरसूरिः । तस्य विक्रमात् १४६० (६४) वर्षे जन्म १४७० दीक्षा, १४९६ पंडितपदं, १५०१ वाचकपदं, १५०८ आचा-र्यपदं, सं० १५१७ गच्छनायकपदं ।

तत्पट्टे ५४ सुमतिसाधुसूरिः । 15

तत्पट्टे ५५ हेमविमलसूरिः । यो भगवान् क्रियाशिथिलसमुदायोपि स्वयं संविग्नः क्रियोद्धारकरणे ऋषिहानाश्रीपतिऋषिगणपत्याद्या लुङ्का-मतं त्यक्त्वा श्रीगुरोःपार्श्वे प्रवृज्य तन्निश्रां यावज्जीवं प्रपेदिरे ।

तत्समये विक्रमात् १५६२ वर्षे कटुकमतं, १५७० वर्षे लुङ्कामतान्निर्गत्य बीजाख्येन ऋखेन बीजामतमुत्पेदे ततः विक्रमात् १५७२ वर्षे नागपुरीयत- 20 पागणान्निर्गतपार्श्वचन्द्रोपाध्यायेन सं० १५७५ पार्श्वचन्द्रमतमुद्भावितं ।

तत्पट्टे ५६ श्रीआणंदविमलसूरि । सुविहिताग्रणीः कुमततमोदिन-करस्तस्य विक्रमात् १५४७ वर्षे इलादुर्गे जन्म । १५५२ व्रतं १५७० सूरिपदं येन स्वामिना दुष्कालप्रभावजन्यविविधकुपथमुह्यमानजनान् विलोक्य तदुद्धारनिर्द्धारितमतिना गुर्वाज्ञया विक्रमात् १५८२ वर्षे क्रियोद्धारकरणेन 25 व्युच्छिन्नं तीर्थं प्रभावितं तदद्यापि संवेगमतं ।

भूरयः संति सूरयो गच्छे गच्छे च गर्विताः ।
आणंदविमलादन्यो धन्यो नास्ति महीतले ।१। +

इति स्तुतिः मालवीऋषिकृता। श्रीगुरोरादेशात् संविग्नो यावज्जीवं षष्ठतपोभिग्रही श्रीविद्यासागरोपाध्यायो, मेवातमरुदेशप्रमुखदेशेषु विहृत्य बोधिबीजमुप्तवान् क्रियोद्धारादनु चतुर्दशवर्षाणि षष्ठचतुर्थाभ्यां विशंति- 5
स्थानकाद्यनेकविकृष्टतपः गुरुवश्चक्रुः, प्रांते नवभिरुपवासैः, अहमदावादे समाधिना मृत्वा १५९६ वर्षे स्वर्ययौ ।

तत्पट्टे ५७ श्रीविजयदानसूरिः। विविधमहोत्सवजिनप्रतिष्ठाकृत् सिद्धांतपारगामी वायुवदऽनेकदेशाऽप्रतिबद्धविहारी तपस्वी यावज्जीवविकृति पंचकत्यागी बभूव । तत्समये शत्रुंजययात्रासंघाः सोत्सवा भूयांसो जज्ञिरे 10
शत्रुंजये चतुर्मुखादिप्रासादाश्च । सं० १५८७ वर्षे कर्मासाहेन १६तम

---

+ श्रीआनन्दविमलसूरिभिः वि०सं०१५८२ क्रियोद्धारश्चक्रे ॥ विंशतिस्थानकस्य ४००चौथभक्ताः ४००षष्ठभक्ताः विहरमानस्य २०षष्ठाः श्रीवर्धमानस्य २२९ षष्ठाः अन्येपि षष्ठाः ज्ञानावरणीयक्षयार्थं ५द्वादशमा विघ्नक्षयार्थं ५द्वादशमा दर्शनावरणीयक्षयार्थं ६ दशमा मोहक्षयार्थं २८ अष्टमा वेदनीयायुर्गोत्रक्षयार्थं ८ दशमाष्टमाः तपांसि कृतानि ॥ इति श्रीविजयलक्ष्मीसूरिविरचितायां तपागच्छपट्टावल्यां ॥ एषा पट्टावली द्वितीयभागे मुद्रयिष्यते ॥

तथा तच्छिष्यो विजयदानसूरिः क्रियोद्धारसहायकृत् । तस्य शिष्यः, पूर्वं खरतरगच्छः पश्चात्तपोगच्छाचरणः, देवगिरौ श्रीहीरविजयसूरीणां सहाध्यायी, गिर्वाणभाषाजल्पदक्षः, तिव्रबुद्धिः, प्रखरवादी, चतुर्विधवादनिष्णातः, श्रीजंबूद्वीपप्रज्ञप्तिवृत्ति (वि०सं०१६३९)—कल्पकिरणावली (श्लो० ४८१४) (वि०सं०१६२८ दीपावल्यां राजधन्यपुरे)—कुमतिकुद्दालः—प्रवचनपरीक्षा—तपागच्छपट्टावलीसूत्र—तद्वृत्ति—नयचक्र—ईरियापथिकाषट्त्रिंशिकावृत्ति (श्लो० ८००)—औष्ट्रिकमतोत्सूत्रदीपिका (वि०सं०१६१७)—पर्युषणाशतकप्रकरण—तद्वृति—गुरुतत्वदीपिका (श्लो० १००० )—प्रमुखग्रंथानां प्रणेता, उ०श्रीधर्मसागरः ॥

उद्धारः कृतः। तस्य च विक्रमात् १५५३ वर्षे जामलास्थाने जन्म। १५६२ व्रतं, १५८२ (८७) सूरिपदं, (सच) १६२२ वर्षे स्वर्ययौ।

तत्पट्टे ५८ श्रीहीरविजयसूरिः। तस्य विक्रमात् १५८३वर्षे मार्ग-सुदि ६ जन्म, पितुर्नाम कुंवरजी, मातुर्नाम नाथीबाई, वृद्धउकेशज्ञातिः षीमसरागोत्रं सं०१५९६ दीक्षा,सं०१६०७ पंडित पदं, १६०८ वरकाणपार्श्वे, 5 वाचकपदं, सं० १६१० सीरोहीनगरे सूरिपदं, श्रीआगरानगरे श्री चिंतामणिपार्श्वस्य १६४० प्रतिष्ठा कृता। तथा लुंपकमते ऋ०मेघजीनाम्ना स्वमतं परित्यज्य पंचविंशतिमुनिगु(ग)णेन समं श्रीसूरिपार्श्वे दीक्षा गृहीता। येषामुदपदेशामृतरसमाऽऽकन्ठं निपीय राजाधिराजपातस्याहश्रीमदकब्बरसम्राट् स्वकीये अनेकदेशसमुदायात्मकद्वादशसूबास्थाने षाण्मासिकामारिप्रव- 10 र्त्तनं, जेजीयाख्यकरमोचनं च चक्रे। तद्व्यतिकरस्तु जगतः प्रतीतः, सामस्त्येन वक्तुं वाक्पतिरप्यशक्तः। तस्य च विक्रमात् १६५२ वर्षे भाद्रपदशुक्लैकादश्यां सौराष्ट्रे उन्नतपुरे सर्वातिचारालोचनपूर्वमनशनेन स्वर्गः। तत्तीर्थं तु जलधिवेलानिलान्दोलत्पताकं स्तूपरूपं संसारार्णवतरणे यानपात्रतां स्वस्य ख्यापयज्जयति। 15

तत्पट्टे ५९ विजयसेनसूरिः। येन भगवता महाराजाधिराजपातस्याहअकब्बरसभायां पंचशतभट्टैः सह वादं विधाय जयश्रियाः पाणिग्रहश्चक्रे"कालीसरस्वती"विरुदं लेभे। वैदुष्यममुष्य पुनर्वाचस्पतेरप्यतिशायि। तद्विहंतु नमोदुर्वाररागादीति योगशास्त्रसूत्राद्यपद्यस्यार्थसप्तशती श्रीगुरुभिर्विदधे, सुक्तावल्याद्यनेकशो ग्रंथाश्च। विस्तारार्थं विजयप्रशस्ति- 20 रालोक्या। तेषां नारदपुर्यां विक्रमात् १६०६(४) वर्षे जन्म, १६१७(१३) दीक्षा, १६२८ सूरिपदं १६७२(७१) वर्षे श्रीस्तंभतीर्थे स्वर्गः।

तत्पट्टे ६० श्रीविजयदेवसूरिः। मानुष्येपि देवमूर्तिरेव यावज्जीवं पुनः पुनः च विकृतित्यागी संप्रति वर्तमाने तपसा षष्ठाष्टमचतुर्थादिभिरावर्तीन (?) धन्यर्षेरप्यतिशायी। श्रीवीर इव दुर्गोपसर्गेप्यक्षुब्धधैर्यः 25 गच्छांतरीयैर्विरोधे क्रियमाणेपि सञ्जातवैराग्यशांतरसो संविग्नमौलिमा-

णिक्यं, विक्रमात् १६३४ वर्षे जन्म, १६४१ (४३) दीक्षा, १६५६ (५५) वैशाखे सूरिपदं १६७३(७१) गच्छनायकपदं । अस्य श्रीभगवतस्तपस्तेजोभिरंजितेन महाराजाधिराजपातस्याहश्रीजहांगीरसम्राजा "महातपा" इतिनाम चक्रे । तथा श्रीगुरूपदेशसुधाऽधिकरसास्वादलुब्धेन राणाश्रीजगतसिंहजीनाम्ना उदयसागरपीछोलाख्ये महासरोद्वये जीवहिंसा निषिद्धा। तथास्मिन्विजयिनि श्रीजिनशासनश्रियाः प्रभावनालंकारा भूयांसो वभुवुः भगवता स्वविहारेणानेकदेशाः पवित्रीकृताः ॥ 5

तत्पट्टे ६१ श्रीविजयसिंहसूरयोपि जाग्रद्युगप्रधानोपमाना आसन्। तेषां विक्रमात् १६४४ मेदनीपुरे साहनाथु–भार्यानायकदेगृहे जन्म १६५४ दीक्षा १६५५ पंडितपदं १६७५ (७३) वाचकपदं १६८१ (८२) आचार्यपदं 10 यद्वचनचातुर्यमाधुर्यरञ्जितो राणाजगतसिंह श्राध्ध इव जिनधर्मानुरक्त आसीत्, १७०८ वर्षे स्वर्गं गतः२८वर्षाणि आचार्यपदं प्रपाल्य दक्षिणदेशे विजयदेवसूरीणां मुखांभोजादुपदेशं प्राप्य मृतः ।

( श्रीविजयदेवसूरिरपि ) विक्रमात् १७१३ आषाढशुक्ल११देवशा- १६८६ यननाम्ना प्रतीतायां उन्नतपुरे स्वर्गं गतः । 15

तत्पट्टे ६२ श्रीविजयप्रभसूरिः (तस्य) १६७७ माघसुदि ११ जन्म, दीक्षा, १७१३ भट्टारकपदं, स चायं भगवानाचन्द्रार्कं विजयतां ।

यस्मिन्नभ्युदिते तपागणश्रीर्युवतीव पीवरानगारागारिपयोधराभ्यां अचीयमानांगोपांगव्याख्यानविपयिनी विबुधजनानानन्दयति । इति ।

इति गुरुपट्टावली समाप्ता 20

*अनुपूर्तिः १* — (प्रथम लेखकेनैव संयोजिता)

तत्पट्टे ६३ श्रीविजयरत्नसूरिः × पिता हीरानन्द माता हीरादे पालणपुरे जन्म सं० १७२२ दीक्षा, सं० १७३२ आचार्यपदं, सं० १७५० सूरिपदं, सर्वायुः ६३वर्षाणि प्रपाल्य, सं० १७७३ भाद्रवावदि२ उदेयपुरे स्वर्गं गतः । 5

तत्पट्टे ६४ श्रीविजयक्षमासूरिः। माताभिधानेन चतुरांदे. पिता चतुरासाह, तद्गृहे जन्म पालीमध्ये, सं० १७२८ दीक्षा, १७७३ सूरिपदं, सर्वायुर्वर्षाणि ५८ प्रपाल्य,सं०१७८५वर्षे चैत्रशुदि ५ मांगलोरमध्ये स्वर्गं गतः ।

तत्पट्टे ६५ विजयदयासूरिः । तत्पट्टे ६६ श्रीविजयधर्मसूरिः ।

*अनुपूर्तिः २* — ( द्वितियलेखकेन पूरिता ) 10

तत्पट्टे ६७ श्रीजैनेन्द्रसूरिः । तत्पट्टे ६८ श्रीदेवेन्द्रसूरिः ।

*अनुपूर्तिः ३* —

तत्पट्टे ६९ श्रीधरणेन्द्रसूरिः । तत्पट्टे ७० विजयराजेन्द्रसूरिः । तत्पट्टे ७१ विजयमुनिचन्द्रसूरिः । तत्पट्टे ७२ विजयकल्याणचन्द्रसूरिः ।

---

× श्रीरत्नसिंहसूरिशिष्यशिवविजयेन गीरनारतीर्थमाला रचितास्ति ।

सं० १७१२ में गुजराती लुंकाशिवजीआचार्यना शिष्य गुरुथी कदाग्रह करी निकलीने ढुंढिमांहि रह्या तपस्या करवांसु लोकां मांन्या, स्वमत "ढुंढिया" नामें थाप्यो । थापनानिक्षेपो निषेधवाथी महानिंदक, आपथापी गुरुआज्ञालोपक गोशालामती जांणवा लाहोरमध्ये ।

# उपकेशगच्छीया पट्टावलिः+

[ कर्ता — ]

॥ श्रीमत्पार्श्वजिनेंद्राय नमः ॥ श्रीमत्केशीकुमारगणधरेभ्यो नमः ॥ श्रीमद्रत्नप्रभसूरिसद्गुरुभ्यो नमः ॥ ओकेशशब्दस्यार्थाः लिख्यंते ॥

इशिक् ऐश्वर्ये, ओकेषु गृहेषु इष्टे पूज्यमाना सती या सा ओकेशा सत्यिका नाम्नी गोत्रदेवता । अत्र ओक शब्दो अकारांतः तस्यां भवस्तस्या अयमिति वा ओकेशः । भवे इत्यण् प्रत्ययः तस्येदमित्यनेन वा अणप्रत्ययः । सत्यिका देवी हि नवरात्रादिषु पर्वसु अस्मिन् गणे पूज्यते सा चास्य गणस्य अधिष्टात्री अतएवास्य गच्छस्य ओकेश इति यथार्थं नाम प्रोच्यते सद्भिरिति प्रथमोऽर्थः ॥ १ ॥ ईशनमीश ऐश्वर्यं ओकैर्महर्द्धिकश्राद्धप्रमुखलोकानां गृहैरीशो यस्यां सा ओकेशा ओसिका नयरी । तत्र भव ओकेशः । ओसिकानगर्यां हि अस्य गणस्य ओकेश इति नाम श्रीरत्नप्रभसूरीश्वरतो विख्यातं जातमिति द्वितीयोऽर्थः ॥ २ ॥ अः कृष्णः उः शंकरः को ब्रह्मा । एषां द्वंद्वसमासे ओकास्ते ईशते पूज्यमानाः संतो देवत्वेन मन्यमानाः संतश्च येभ्यस्ते ओकेशाः ॥ ओके कृष्णशंभुब्रह्मभिर्देवैरीशते ये ते वा ओकेशाः । परशासनजनाः क्षत्रियराज्यपुत्रादयः प्रतिबोधविधानात्तेषामयं ओकेशः । तस्येदमित्यणप्रत्ययः । श्रीरत्नप्रभसूरिभिस्तेषां पारतीर्थिकधर्मनिष्ठातः सिद्धान्तोक्तविशुद्धजैनधर्म्मनिष्ठायां प्रतिबोधदानेन प्रवर्तना कृता । तथा च श्रूयते पूर्व्वं हि श्रीरत्नप्रभसूरीणां गुरवः श्रीपार्श्वापत्यीयके-

+ इयं पट्टावली अर्थान्तरसंभावनाभिया किंचिदपि स्वाभिप्टं परिवर्तनं विनैव मुनिश्रीजिनविजयजीसंपादित "जैनसाहित्यसंशोधकस्य" प्रथमे भागे मुद्रिता "मक्षिका स्थाने मक्षिका" इति न्यायेन यथास्थितैव–अशुद्धप्राया एवात्र मुद्रिता ।

श्रीकुमारानगारसंतानयित्वेन विख्यातिमंतो जगति जज्ञिरे। ततः प्राप्तसूरिमंत्राः ससत्तंत्रा रमणीयाऽतिशयनिचयाः स्वकीयनिस्तुपशेमुखीप्राग्भारसंभारात् ज्ञातत्रिदशसूरयः श्रीमच्छ्रीरत्नप्रभसूरयः कियति गते काले विहरंतः संतः श्रीओसिकानगर्यां समवसृताः। तस्यां च सर्वे लोकाः पारतीर्थिकधर्म्मधारिणो संति। न कोपि जैनधम्मधोरी। ततः साध्वाचारं 5 प्रतिपालयद्भिः सिद्धान्तोक्ततीर्थंकरधर्म्मशुभकर्मप्ररूपणां कुर्वद्भिः सद्भिः श्रीरत्नप्रभसूरिभिः पारतीर्थकानेकच्छेकविवेकिलोकाः प्रतिबोधितास्तत एते ओकेशा इति विरूदो विख्यातो जातः। इति तृतीयो अर्थः ॥ ३ ॥ अः कृष्णः, आः ब्रह्मा, उः शंकरः, एषां द्वंद्वे आवस्ततः ओभिः कृष्णब्रह्मशंकरैर्देवैः कायते स्तूयते देवाधिदेवत्वादिति ओकः प्रस्तावात् श्रीवर्ध- 10 मानस्वामी क्वचिदिति ड प्रत्ययः, ओकश्चासौ ईशश्च ओकेशस्तस्यायं ओकेशः वर्तमानतीर्थाधिपतिश्रीवर्धमानजिनपतितीर्थाश्रयणादिति चतुर्थोऽर्थः ॥ ४ ॥

अः अर्हन्, अः स्यादर्हति सिद्धे चेत्युक्तेः। प्रस्तावादिह अ इति शब्देन श्रीवर्धमानस्वामी प्रोच्यते। ततः अस्य ओको गृहं चैत्यमिति यावत्, 15 ओकः श्रीवर्धमानस्वामिचैत्यमित्यर्थः। तस्मादीशः ऐश्वर्यं यस्य स ओकेशः यतोयं गणः श्रीमद्वावीरतीर्थंकरसान्निध्यतः स्फातिमवापेति पंचमोऽर्थः ॥५॥ एवमस्य पदस्यानेकेऽप्यर्थाः संबोभुवति परं किं बहुश्रमेणेति ॥

अथ उपकेशशब्दस्य कियंतोऽर्थो लिख्यंतेः उप समीपे केशाः शिरोरूहाः सत्यस्येति उपकेशः। श्रीपार्श्वापत्यीयकेशिकुमारानगारः। एत- 20 दुत्पत्तिवृत्तांतस्तु: श्रीस्थानांगवृत्त्यादौ सप्रपंचः प्रतीत एवास्ति। तत एवावगंतव्यः। ततः उपकेशः श्रीकेशिकुमारानगारः पूर्वजो गुरुर्विद्यते यस्मिन् गणे स उपकेशः। अभ्रादित्वाद प्रत्ययः। अस्मिन् गच्छे हि श्री केशिकुमारानगारः प्राचीनो गुरुरासीत्। ततो यथार्थमुपकेश इति नाम जातमिति प्रथमोऽर्थः ॥ १ ॥ उपवर्जितास्त्यक्ताः केशा यत्र सः उपकेशः ओसिका- 25 नगरी तस्यां हि सत्यिका देव्याश्चैत्यमस्ति। तदग्रे च घनैर्जनैः प्रथमजात-

बालकानां सुदिने दिने मुंडनं कार्यंते तत उपकेश इति यथार्थं नाम ओ-
सिकानगर्याः प्रख्यातं जातं। तत्र भवो यो गच्छः स उपकेशः प्रोच्यते
सद्भिर्विद्वद्भिः। अत्र हि भवे इत्यनेन सूत्रेण अणि प्रत्यये संज्ञापूर्वकस्य
विधेरनित्यत्वादवृद्धेरभावः। श्रीरत्नप्रभसूरितो अनेकश्रावकप्रतिबोधवि-
धानानंतरं लोके गच्छस्य उपकेशेति नाम प्रसिद्धं जातमिति द्वितीयोऽर्थः 5
॥ २ ॥ को ब्रह्मा, अः कृष्णः, अः शंकरः, ततो द्वंद्वे काः। तैरीष्टे ऐश्वर्य-
मनुभवति यः सः केशकानां ईशः ऐश्वर्यं यस्माद्वा केशः पारतीर्थिकधर्म्मः
सः उपवर्जितस्त्यक्तो यस्मात्स उपकेशस्तीर्थकृदुक्तविशुद्धधर्म्मः स वि-
द्यते यस्मिन् गच्छे स उपकेशः। अत्रापि अभ्रादित्वादप्रत्ययः। इति तृती-
योऽर्थः ॥ ३ ॥ कं च सुखं ई च लक्ष्मीः कयौ ते ईशे स्वायत्ते यत्र यस्मा- 10
द्वा स केशः—अर्थात् जैनो धर्मः। स उपसमीपे अधिको वाऽस्माद्गच्छा-
त्स उपकेशः इति चतुर्थोऽर्थः ॥ ४ ॥ कश्च अश्च ईशश्च केशाः—ब्रह्म-
विष्णुमहेशाः। तद्धर्म्मनिराकरणात्ते उपहता येन सः उपकेशः। प्रकरणा-
दत्र श्रीरत्नप्रभसूरिः गुरुः तस्यायं उपकेशः। अत्रापि तस्येदमित्यणि प्र-
त्यये पूर्ववद्वृद्धेः अभावो न दोषपोषायेति पंचमोऽर्थः ॥ ५ ॥ 15

इत्थमन्येऽप्यनेके अर्था ग्रन्थानुसारेण विधीयंते परमलं बहुश्रमे-
णेति। एवमुक्तव्यक्तयुक्तिव्यक्तिशक्त्या ओकेशोपलक्षणे उभे अपि नाम्नी
यथार्थे घटां प्राचतः।

इति ओकेशोपकेशपदद्वयदशार्थी समाप्ता ॥

संवत् १६५५ वर्षे ॥ श्रीमद्विक्रमनगरे सकलवादिवृंदकंदकुद्दाल- 20
श्रीकक्कुदाचार्यसंतानीयश्रीमच्छ्रीसिद्धसूरीणां आग्रहतः श्रीमद्बृहत्खरतर-
गच्छीयवाचनाचार्यश्रीज्ञानविमलगणिशिष्यपंडितश्रीवल्लभगणिविरचिता
चेयम्। श्रीरस्तु ॥

ग्रीष्महेमंतिकान् मासान्, अष्टौ भिक्षुः प्रचक्रमे।
रक्षार्थं सर्वजंतूना वर्षास्वैकत्र संवसेत् ॥ १ ॥ 25

मनुष्याणां सर्व्वेषु पदार्थेषु सारो धर्म्म एव। मनुष्यत्वं धर्मेणैव
वर्ण्यते ॥ स धर्म्मो वर्षासु मुनिपार्श्वात् श्रोतव्यः। यतयो वर्षास्वेकत्र-

तिष्ठन्ति, किमर्थं ? सर्वजंतूनां रक्षार्थं । धर्म्मस्य सारं सर्व्वं जीवेषु दया। वर्षासु पृथ्वी जीवाकुला भवति संयमो विराध्यते । अतो जीवरक्षार्थं चतुर्मासकल्पं तिष्ठंति ।

शिवशासने पि जीवदयास्वरूपमेवं व्यावर्णितं—

पश्यन् परिहरन् जंतून् मार्जन्या मृदुसूक्ष्मया । 5
एकाहविचरेद्यस्तु चन्द्रायणफलं भवेत् ॥ १ ॥

महाभारते कृष्णद्वीपायनेनाप्युक्तं—

यो दद्यात्कांचनं मेरुः कृत्स्नां चापि वसुंधरां ।
एकस्य जीवितं दद्यात् न च तुल्य युधिष्ठिरः ॥ २ ॥

परेप्येवं वदन्ति जैनवाक्यस्य किं वाच्यं । मुनयः क्षेत्रस्य त्रयोदश 10 गुणान् वीक्ष्य तिष्ठन्ति

चखिल १ पाण २ थंडिल ३ वसहि ४ गोरस ५ जणा ६ उले ७ विज्जे ८ ओसह ९ धन्ना १० हिवइ १० पासंडा ११ भिखु १२ सिज्झाय ॥ १३ ॥

एते त्रयोदश गुणाः । तत्र स्थिता दशधा समाचारी पालयंति—

इच्छा १ मिच्छा २ तहकारो ३ आवस्सिया ४ निसीहिया ५ 15 आपुच्छणाय ६ पडिपुच्छ ७ छन्दणा य ८ निमंतणा य ९ उपसंपयाकाले १० समाचारी भवे दसहा ॥ १ ॥ पुनः धर्म्मशास्त्राण्युपदिशन्ति । श्राद्धा वासनावासितचित्ताः शृण्वंति ॥

परं चातुर्म्मासकात्पञ्चाशद्दिने व्यतिक्रांते कल्पावसरं ।
वीसहि दिणेही कप्पो पञ्चगहाणीय कप्पठवणायं । 20
नव (९) सय तेणू (९३) एहिं वुच्छिन्ना संघआणाए ॥ १ ॥

अधुना कल्पावसरे अन्यग्रन्थादरो न । यथा दिव्यकौस्तुभाभरणं प्राप्य अन्यरत्नाभरणेषु निरादरत्वं जायते । यथा च कुंडपातालामृतं प्राप्यांबुजलास्वादो न रोचते । भारतीभूषणकविजनवचनरचनामासाद्य सामान्यजनवचांसि न रोचते। चक्रवर्तिन अग्रे सामान्यराजानोऽपसरन्ते देवानां 25 नन्दीश्रवणेनान्यशब्दा हीनतां व्रजंति । गन्धहस्तिनो गंधे अन्यगजेन्द्रा मद-

जलविकला भवन्ति । केवलज्ञानागमने अन्य ज्ञाना अपसरन्ति । कल्पवृ-
क्षाग्रेऽन्ये तरवाः न राजते । सूर्योदये खद्योतस्य का प्रभाः । मुक्तिसौख्याग्रे
कानि सौख्यानि । सिंहध्वनेः पुरो यथा अन्ये शव्दा न राजते तथा कल्पा-
वसरे अन्यानि शास्त्राणि आदरो न । स कल्पो अनेकविधः श्रीशत्रुंजय-
कल्पः गिरनारगिरिकल्पः कदम्बगिरिकल्पः अर्बुदाचलकल्पः अष्टापदकल्पः 5
सम्मेतगिरिकल्पः हस्तिनापुरकल्पः मथुरानगरीकल्पः सत्यपुरकल्पः शंखे-
सरकल्पः स्तंभनतीर्थकल्पः यतीनां विहारकल्पः वस्त्रस्य कल्पसंज्ञा ।
अनेन प्रकारेणानेके कल्पसंज्ञाः एके कल्पाः एवं विधा वर्त्तते,यस्य प्रमाणेन
श्रीपादलिप्ताचार्यो यावदायाति साधवो विहृत्य तावत् पंचतीर्थनमस्कारं
विधायागच्छंति । एके कल्पास्ते उच्यते येषां प्रमाणेन अदृशीकरणं आका- 10
शगमनं स्वर्णसिद्धिः लक्ष्मीप्राप्तिः मित्रपुत्रबांधवस्वजनप्राप्तिः प्रभृतिलब्धयः
संपद्यते । परमयं कल्पो ऽमेयमहिमानिधिः इह लोकाभीष्टसौख्यकारणं ।
अयं कल्पो दशाश्रुतस्कन्धस्याष्टममध्ययनं । नवमपूर्वात् श्रीभद्रबाहुस्वामि-
नोद्धृतः अमेयमहिमानिधानः सर्व पापक्षयं करः ।

यथा श्रूयमानः द्रुमेषु कल्पद्रुः सर्वकामफलप्रदः, यथौषधीषु पीयूषं
सर्वरोगहरं, परं रत्नेषु गुरुडोद्गारं यथा, सर्वविषापहारः मंत्राधिराजो 15
मंत्रेषु यथा सर्वार्थसाधकः, यथा पर्वसु दीपाली सर्वात्मासुखावहा, तथा
कल्पः सद्धर्मे शास्त्रेषु सर्वपापहरः । तथा सर्वसिद्धान्तमध्ये श्रीकल्पो गुरु-
तरः, यथा पर्वतानां मध्ये मेरुः तीर्थमाहिं शत्रुञ्जयः दानमध्ये अभयदान
अक्षरमध्ये ॐकार देवेष्विन्द्रः ज्योतिषीषु चंद्र गजेंन्द्रेष्वैरावण समुद्रेषु
स्वयंभुरमणः तुरङ्गमेषु रेवत ऋतुषु वसन्त मृतिकायां तूरी सुगंधीषु कस्तुरी 20
धातुषु पीतं मोहनेषु गीतं काष्टेषु चन्दनं इंद्रियेषु नेत्रं व्यवहारपर्वसु दीपा-
लिका धर्म्मशास्त्रेषु कल्पः सर्वपापहारः सर्वदुखक्षयंकरः ।

यथा जनमेजयराजा अष्टादशपर्वश्रवणात् १८ विप्रहत्यात्यागः
यवनिका श्यामत्वं जातं । यथा एकस्मिन् दिवसे जनमेजयराजाग्रे पुरोहि-
तेन कथितं पूर्वे त्रेतायुगे पांडवैश्च कौरवैः कृता अष्टादशाक्षौहिणिभृताः 25

